विज्ञोऽस्मि[१]। तत्कृत्येनापि तातस्तदुपरि संतुष्य मध्याभेकां राजसभां विधायास्य गुणान् प्रशस्यास्मै महार्हमणिजटितं [२]सौवर्णकिरीटमर्पयामास। तस्मादेव दिवसादमुं निजगुणसम्निगणमपि व्यधुः पितृचरणाः।

अथ [३]माकन्दमञ्जरी[४]मकरन्दबिन्दुवृन्दानि स्वादं स्वादं सानन्दं मञ्जुलमालपन्तीनां कोकिलानां [५]काकलीकलकलेन दिङ्मण्डलं मुखरयन्, [६]चन्दनपरिमलभृता मलयानिलेन रसाल-तिलकचम्पकादिमहीरुहालिङ्गनजनितानन्देनेव कोरकितामङ्गयष्टिकामुद्वहन्तीनां वासन्तीनां ललितलतानासुसमाहानि मन्दमन्दमान्दोल्याङ्[७]हारं शिक्षयन्निव, [८]इन्दिरासुन्दरे[९]न्दीवरभर-[१०]मन्तुन्दिलानां [११]मिलिन्दजालानां मञ्जुलगुञ्जनैर्निकुञ्जपुञ्जेषु विश्रान्तिसुखार्थं निषण्णानां पान्थजनानां मोहनिद्रां जनयन् वनविहाराय रसिकजनमनांसि समुत्साहयन् [१२]पुष्पसमयः समुपतस्थे। तस्मिन्नतिरमणीये वसन्तसमये नगरोपान्तवर्ति रम्यं विशालं विलासोद्यानमुपगम्याहं प्रियसखीजनेन समं कियत्कालमक्रीडम्। तदानीमयं दुरात्मा तेनोद्यानवर्त्मना क्वापि प्रयाति स्मेति सखीभिः समं रममाणायां मयि तस्य दृष्टिर्निपतिता। 'अहं राजकन्याऽस्मीति' विज्ञातममुना निजचेटीद्वारेण। ततोऽयं प्रकुप्य मया सार्कं स्नेहं कलयितुं मनसि निश्चिकाय। ततः प्रभृति पापात्मासौ मत्सखीहस्तेन नवनवानि विचित्राणि सुन्दरवस्तूनि निरन्तरं मदन्तिकं प्रेषयति स्म। तन्याममुनाऽनयें[१३]ष्टोपायनेन तदुपर्यहं समशयिषि। [१४]तान्युपायनान्यहं तदुपायनीकृतानि तानि वस्तूनि। अतोऽयं दुरात्मा सुतरां रुष्टो बभूव। अनन्तरमेकदा मम तातोऽमुना ममसुद्याने समुपविष्टो विविधमाल्पति स्म। आल्पनान्तर एवावसरमुपलभ्यासौ क्रूरसिंहस्तातमब्रवीत्– 'महाराज ? पौरजनेष्वधुना– ' राजकुमारी विवाहयोग्या संजाता; तदपि न जाने किमिति महाराजस्तस्याः परिणयचिन्तां नावहति' इति देवपादानाम[१५]पवादः समाकर्ण्यते। राजेन्द्र ? ममाप्याश्चर्यमिदम्– ' मद्भगिन्यां कुमुदिन्यां [१६]परिणयार्हायां संजातायामपि श्रीमान् किमिति शान्तमना आस्ते ? किं कोऽपि राजकन्यानुरूपो राजकुमारो न लभ्यते ? तत्कारणं महाराजश्चेदेनं न बोधयेत्तदा कमन्यं वेदयेत् ? प्रभो ? अहमपि श्रीमतां पुत्र इवास्मि। श्रीमतां दुःखे ममाप्यंशो विद्यत इति यदेव दुःखं भवेन्महाराजस्य तदेनं दासजनं प्रति वक्तव्यं येन सत्वरं तदुपायो विधीयेतेति।"

एतावदुदीर्य कुमुदिनी निरश्वसत्। पथिकः साश्चर्यो भूत्वा पप्रच्छैनाम्– ' राजकुमारि ? ततः किमजनि ? कथं निःश्वसिति भवती ?' इति। कुमुदिनी। क्षन्तव्योऽपमविनयो महानुभावेन। संघटितघटनानुस्मरणेन मे हृदयं सहजमेव दुःखाकुलमभूदित्यहं नि श्वासमग्रहीषम्। स्वस्थाऽहमिदानीमस्मि। तदग्रे निशम्यताम्– ' क्रूरसिंहस्येदृशीं विनयपटुलां गिरमाकर्ण्य

१ प्रग। २ मुकुटम्। ३ आम्रमञ्जरी। ४ ' मकरन्दः पुष्परसः '। ५ 'काकली तु कले सूक्ष्मे।' ६ परिमल सुगन्धः। ७ अङ्गविक्षेपम्। ८ कान्तिः। ९ इन्दीवरं–कमलम्। १० मरन्द पूर्णानाम्। ११ मिलिन्दः भ्रमरः। १२ वसन्तकालः। १३ उपहारेण। १४ स्नेहवती। १५ निन्दा। १६ कन्याविवाहयोग्यतायाम्।

तातस्तमारभताभिधातुम्–'शूरसिंह । शृणु, तद्वृत्तमहं तुभ्यमेव कथयिष्यामि । त्वां न कथयेयं चेत्कमहं कथयेयम्? अजितदुर्गनगराधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजपुत्राय श्रीचन्द्रसिंहायैव राजकुमारीयं दातव्येति ममासीन् विचारः किन्तु बलीयसी परमेश्वरेच्छा । अकस्मान्महाराजश्रीकेसरिसिंहस्यारण्ये वधोऽजनि । तदीयौ पुत्रावपि न जाने क्व प्रनष्टौ? तयोरद्यावधि न काचन ¹प्रवृत्तिरपि लभ्यते । वत्साया मे कुमुदिन्या अनुरूपः स एव सर्वगुणसम्पन्नः श्रीचन्द्रसिंहो वर आसीत् । यदा कदापि चन्द्रायैव तस्मै कुमुदिनीयं दास्यते । शूरसिंह? राजपुत्रयोस्तयोरन्वेषणकार्यं तुभ्यमेवाहं समर्पयामि' इति ।

वार्तामिमामाकर्ण्यैव ²कर्णयोस्तुद्यमान इव भ्रुकुटिमारचय्य सरोषः सहसा नराधमो वक्तुमारेभे–'किमाह श्रीमान्? ³अननुगुणोऽयं विचारः श्रीमताम् । तस्य राज्ञो यो वधोऽजनि स तत्कर्मणैवाभवत् । नृपोऽसौ बहुदुरभिमानी कुबुद्धिश्चाभूत् । तस्य कनिष्ठकुमारो यो नष्टः स सम्प्रति देवीभक्तानामधिकारे वर्तते । सोऽपि स्वल्पकालेनैव देव्या बलिः कल्पयिष्यते । तदीयज्येष्ठकुमारगवेषणार्थमपि बहवो देवीपूजका विचरन्ति किन्तु नासौ प्राप्यते । राजलक्ष्मीपरित्यक्तेन तेन तत्र इतो भ्रमता तापसेन समं राज्यसुखसंवर्धिताया अविज्ञातकष्टक्लेशायाः सुकुमार्याः कुमार्याः कथं ⁴परिणयमङ्गलमुपपद्येत? इयं तु केनापि महामहिमशालिना महीमहेन्द्रेण विवाहनीया' इति ।

ईदृशं तस्य वचनं कर्णे कृत्वा रोषारुणनयनो मम तातस्तमवादीत्–'नरसिंह? नाहं शक्नोमि तव सम्मतिमनुमन्तुम् । चन्द्रेणैव वा कुमुदिनीं विवाहयिष्यामि यावदायु कौमारब्रह्मचर्यव्रतं वाऽङ्गीकार्य तामहं परमेश्वराराधने लीनयिष्यामीति दृढो मे ⁵नियमः । शूरसिंह? ननु दर्शय मां शीघ्रम्–क्वास्ते केसरिसिंहमहाराजस्य कनीयान् कुमारस्तेषां दुर्विनीतानाञ्च निवासस्थलम्? एहि एहि । वयं तेषां दुराचाराणां हस्तात् कुमारं विमोच्य तदीयनीचकर्मणां दण्डं कुर्महे' इति व्याहृत्य क्रुधा सन्तप्यमानमानसस्ततः समुत्थाय शूरस्य करं गृहीत्वा तमाचकर्ष । अतः स धूर्तस्तातेन समं कियद् दूरं गत्वा समयज्ञतया [illegible] न्यवीविदत्–'देव? शान्तमास्ताम् । नावश्यकता जागर्ति खलु श्रीमतां परिश्रमं दातुम् । अहमेव केसरिसिंहमहाराजस्य कनीयांसं कुमारं तेषां दुष्टानां हस्तान्मोचयित्वा समानेष्यामि । सत्यं—पुनरद्यापि विकटस्थले वर्तते यच्चाहमपि न जानामि स्थलम् । ⁶अल्पेनैव यानेहसा तत्स्थानमुपलभ्य कुमारं विमोच्य श्रीमच्चरणसमीपमुपस्थापयिष्यामि ।' इति समुदीर्य तातं नमयित्वाऽसौ चतुरमतिस्तातसकाशाद्गमनं विसर्जयाम्बभूव । शूरसिंहेन राजसेवां विधाय महती सम्पत्ति सम्पादिताऽभवदिति यथैवाथ तातसकाशादपसृतस्तथैव मम प्रासादगृहाभ्यन्तरं प्राविशत् । [illegible] मां समुपेत्य निजदुष्टमनोवृत्तिम् । तमबूबुधदसौ मां बहुविधम् परमाहं तत्कथामुपेक्ष्याहमतितरां तमवामन्ये । 'चन्द्रमेवाहं परिणयेयं यावज्जीवं ब्रह्मचर्यव्रतेनैव वाऽहं परमानन्दकन्दं परब्रह्म स्मरेयमिति' दृढीयान् ममासी

१ वार्ता । २ पीड्यमान । ३ अमर्ष । ४ विवाहोत्सवम् । ५ प्रतिज्ञा । ६ कालेन ।

त्संकल्पः । यदाऽहममुं तिरस्कृतवती तदासौ दुरात्मा सुतरां विवृद्धकोपो मामगादीत्— ‘कुमुदिनि ? मन्यस्व । नो चेदहमन्ते त्वां बन्धनमानयिष्यामि’ इति । एतद्वचनश्रवणसमकालमहं तं भृशं धिक्कृत्य बहिर्निरगमयम् । तदयं मयि क्रूरां दृशं निक्षिपन्निरगात् ।

पान्थोऽयं प्रकुप्य मध्य एवाचकथत्— ‘अरेरे नराधम पापिष्ठ क्रूर ? प्राणिहि कियत्कालम् । हुं ततः ? । ’ इति ।

कुमुदिनी । तदनु कियद्दिनानन्तरं न खलु किमपि घटितमिवेति सम्प्रधार्य निश्चिन्तमनसाऽहं समयं समगमयम् । कमप्यहं वार्तामेनां न न्यवीविदम् । अथैवं गच्छति काले [1]निदाघसमयः समगात् । सत्यहमहमात्मप्रियवयस्याभिः समं सायंसमये तरङ्गानिलकम्पितायां चन्द्रवतीसरित्तीरोपवनवर्तवीथिकायां कदाचित्, परमहरितलतावलिवेल्लित[3]विटपिमनोहरे विलासोद्याने काञ्चन वायुसेवनार्थं गच्छामि । ह्यस्तु चन्द्रवतीतरङ्गिणीतटोपवनाभिवर्षमानाया ममार्द्धवर्त्मनि [4]नीलनिचोलावृतकलेवरा भीषणाकारा दुराचारास्त्रयो नरा सम्मुखीना अभवन्त । झटिति समुपसृत्य तैरहं जगृहे । यावदहमाक्रन्दितुं प्रारेभे तावदेव तेषामन्यतमो मम मुखोपरि करमाधायाक्रन्दन्तीं मां न्यरुणत् । मम सहचर्यो वयस्यास्तु भिया पलायन्त; भीत्या चाहमपि मूर्च्छिताऽभवम् । अथ मूर्च्छोपगमे—‘अहमिह विकटायामटव्यामानीताऽस्मी’ति व्यज्ञायि मया । स्वमरणं सन्निहितमित्यवधार्य जगत्त्रायकं प्रभुमहं स्तोतुमुपाक्रमे । प्रत्यागतचेतनां मामवलोक्यायं चण्डालचक्रवर्ती सादरमतितरां सम्बोधयामास । नाहमभ्युपेतवती तदीयमनुवचनम् । अथ विधाय बहुविधं निर्भर्त्सनामयं भाषणमसौ नृशंसहतको खड्गेनैतां वधयितुं प्रावर्तिष्ट । अत्रान्तरे प्रादुर्भूयात्र भवता रक्षितं मम पातिव्रत्यमित्येतावदस्या मन्दभागधेयाया वृत्तम् । अयि आपन्नशरण धीरशिरोमणे ? योऽयं श्रीमता मदुपरि महानुपकारो व्यधायि तं यावज्जीवमहं न विस्मरिष्यामि । इदानीमात्मपरिचयेनैतां श्रीमच्चरणशरणां कृतार्थयन्त्विति श्रीमानिति सविनयमनयाऽभ्यर्थ्यते ।”

क्षणं विमृश्यायं पान्थोऽब्रूत— ‘राजकुमारि ? अहमपि कश्चन राजराजस्सुतो राजकुमारोऽस्मि । ‘राजयोगी’ इति मां वदन्ति जना । कैश्चित्कारणैरहं भूमण्डले विलोकयन् विचरामि । विचरन्नहमिमां विकटामटवीमासादयम् । पर्यटन्नहमस्यामितस्ततो मार्गमार्गणाय । अकस्मात्करुणाजनकं रुदनाक्रन्दनध्वनिमशृणवम् । तत्क्षणमेवाऽहं रुदनाक्रन्दनध्वनिमभिलक्ष्य तव रक्षणाय त्वदभिमुखमभ्यधावम्’ इति ?

कुमुदिनी । तदयं भवान् कोऽपि राजकुमारः किमु ? परम् ? योगिराज ? कुत्रेदानीं गन्तुमितोऽभिलषति श्रीमान् ? ।

योगिराज. । यत्रेश्वरो मां नेष्यति तत्राहं यास्यामि । परमिदानीन्त्वहं भवतीं त्वदीयपितुर्निकटं नितरां नयामि । परतो गन्तव्यपथं यास्यते मया ।

कुमुदिनी । माननीयमहात्मन्देवमूर्ते योगिराज ? अस्ति किञ्चनाभ्यर्थनीयमस्या हतभाग्याया

---

१ ग्रीष्मः । २ संमुखागताः । ३ विटपी—वृक्षः । ४ निचोलः प्रच्छदपटः ।

बालिकायास्तन्निशम्यतां दयालुनाऽत्रभवता । पुण्यशाली पुरुषोत्तमः कोऽपि श्रीमानित्यहं तर्कयामि । तदागच्छतु भवान्मम पितृचरणोपकण्ठम् । तत्रैव कृतार्थयतु मां श्रीमान् । सर्वथाऽहं श्रीमतामानुकूल्यं सम्पादयिष्यामि । तत्र निवसता श्रीमता सता प्रतिदिनं दर्शने नाहमामानमतितरां पारयिष्यामि ।

योगिराजः । ( कुमुदिनीं परीक्षितुकाम इव साकूतम् । ) राजकुमारि ! ईदृशो यदि भवत्या अभिलाषस्तर्हि यावत्त्वत्पाणिग्रहणं त्वत्पितृसकाशमहं निवसामि । भवत्याः पाणिपीडनमधुना त्वरितमेव सम्पत्स्यत इति विभावयामि ।

कुमुदिनी । ( उत्कण्ठीभूय सनिर्वेदम् । ) मत्पाणिपीडनम् ? तत्तु यदैव परमात्मना निरधारि तदैव भविष्यति । चन्द्रं विहायाहमिह लोके नान्यं कमपि परिणेष्यामि । वल्लभो मे चन्द्रो यदैव लप्स्यते तदैव तेन समं मे पाणिग्रहणमङ्गलं सम्पत्स्यते, अन्यथाऽत्रभवानिव काषायवसनं परिधाय नगरियन्तरि जगदीश्वरे स्वात्मानं नियम्याहं ब्रह्मचर्यमहाव्रतं पालयिष्यामि, इति दृढीयान् मम सङ्कल्पः । भवतु । योगिराज ! किमर्थं श्रीमताऽयं योगवेषो धार्यते ? किं तादृशं भगवति महासङ्कटमापतितं येनैतादृशि वयस्यल्पीयसि योगिनाऽऽपत्तं भवतेति विज्ञापनीयैव बाला ।

योगिराजः । राजकुमारि ! प्रातःकालमहं भवतीं सकलं निजवृत्तं [1]विशकलय्य कथयिष्यामि, यदाकर्ण्य [2]खल्वतिवेलमाश्चर्याम्बुधिकल्लोलमालायां निमङ्क्ष्यति भवती । न विद्यतेऽधुना कथनावसरः । तदेहि—राजकुमारि ! स्वः त्वां त्वत्पितृचरणाभ्यर्णमहं नयामि ।

कुमुदिनी । यथाऽऽज्ञापयति महानुभावः । आगम्यतामत्रभवता । इत्यभिधायोभावपि चलितुमारेभाते । क्षणादेव चेमौ विशालशैल[3]श्रेणीजटिलासु निकुञ्जपुञ्जकुटिलासु महारण्यमालासु [4]निलिल्याते ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ ब्रह्मचर्यशतकसधीच्ये कुमुदिनीचन्द्रे प्रथमा कला ॥ * ॥

---

# अथ द्वितीया कला ।

---

" दयालवः प्राणिषु सौख्यहेतवः समस्तसंसारहितं चिकीर्षवः ।
भवन्ति धन्या नहि कस्य साधवः सदा सदन्तःकरणप्रवृत्तयः ॥ " ( प्रकृतिसौन्दर्ये )

" [5]व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि [6]पतङ्गस्योदये [7]पुण्डरीकं द्रवति च हिमरश्मावुद्गते [8]चन्द्रकान्तः ॥ "

( भवभूतिः )

---

१ विस्तीर्य । २ आश्चर्यम् । ३ पर्वतमालासु । ४ अन्तर्हितौ । ५ अन्योन्यसमान् करोति । ६ सूर्यस्य । ७ कमलम् । ८ शिलाविशेषः ।

प्रजन्ति । कुत्रचिन्नगरमहागारे सरागं गायता गायकजनानां सतानं तारतरा मञ्जुलगानभङ्ग तरङ्गा रसिकहृदयतरङ्गिणीश्वरं तरङ्गयन्ति । सुन्दरराजमन्दिरनिर्गता वन्दनोद्यनरेन्द्रवन्दनात् त्वराणां [1]बन्दिवृन्दारकवृन्दानां हृदयानन्ददायिन्यो मङ्गलमयप्रबोधगीतपरम्परा [2]हरिदन्तरेषु [3]मूर्च्छन्ति । अधुनाऽपि निर्जन एव मार्गः । सर्वत्र किञ्चित्किञ्चित्प्रकाशः सवृत्तोऽस्ति । ब्राह्ममुहूर्ते समुत्थाय विधाय च शौचपूर्विकां क्रियां साम्प्रतं परमानन्दकन्दपरब्रह्मणि निमग्न चेतस्को वर्त्तते ब्रह्मविद् सत्पुरुषः । [4]बालिदेयूपविश्य [5]विद्यार्थिसन्दोहः समस्तकण्ठं स्वपाठं रटति । 'सञ्जातोऽत्र प्रातः समयः' इत्यवधार्य पान्थसमूहोऽपि प्रस्थानाय [6]सनह्यति । इत्येवं कार्यक्रमो दृश्यते विजयनगरराजधान्याम् ।

अत्रान्तरे पुर्वैकस्य शान्ततमाये पथि [7]कक्षनिक्षिप्तदक्षकौक्षेयकाणां [8]भुशुण्डीमण्डितबाहुदण्डानां [9]कलितवारबाणानां [10]सैन्धवारोहाणामिव दलं समुपस्थितम् । शोणितमिवैषां वमन्ति स्म नेत्राणि ग्लानिमिवोद्गिरन्ति स्मापि वदनमण्डलानि, येन जागरिता खलु निखिला रात्रिरेभिः परिश्रान्तमिति प्रतीयते स्म । क्षणादिवासौ सादिन एकः [11]शृङ्गाटकमुपगम्य समवस्थात्स्थिर । एषां नायकः सक्षोभ्यैनानेवं व्यगादीत् हा हन्त ! सम्पूर्णां रजनीं महारण्येषु, नदीपरिसरेषु, पर्वतप्रान्तेषु च परिभ्रमन्तो [12]वयमन्वैषमाम तदपि श्रीमतीं राजकुमारीं नैवाक्रमामहि । हा ! कथमिवाहमधुना श्रीमहाराजाय निजमुखं दर्शयामि ? अये, शान्तिमयेऽस्मिन् पवित्रराजनगरे किमिदमकस्मादापतितम् ? कोऽयमीदृक् कलुषात्मा नराधमो भवेद् य इत्थंसाहसं विधाय राजकुमारीमपहरेत् ? ( क्षणं विचिन्त्य । ) आ, ! यस्मिन्नहनि श्रीमती कुमुदिनी नयनपथीमतिक्रान्तवती तस्मादेव दिवसात् कुरसिंहोऽपि नोपलभ्यते । किन्तु स खलु कथमस्मिन् कर्मणि निजहस्तक्षेपमसौ कुर्यात् ?' इति विचिन्त्य पुनरेव सादिनां प्रधानो मुहूर्तं यावद् विचाराम्बुधितरङ्गमालासु न्यमज्जीत् । परतश्चावदत्— 'नैव नैव । एवं तु न सम्भाव्यते ! तदाऽत्र किमु विधेयम् ? अये ? यदा मां श्री महाराजः – 'क्वेदानीं मम वत्सा कुमुदिनी भवते'ति प्रक्ष्यति, किमुत्तरं तदाऽहं तस्मै दास्यामि ? जगदीश्वर ! [13]कृपमवहेलना ? भवतु । यावदेव यथोचितं भवेद्विचारेण' इति विमृश्य सन्ततं सादिभिः सह श्रीशाऽस्य प्रासादाभिमुखं प्रतस्थे ।

प्रासादे श्रीमता महाराजेनापि समस्ता रात्रिर्जागरणैवातिवाहिता । अतीव चिन्तोद्विग्नमना आसीन्महाराजः । अत्र तत्रान्यमयतो महाराजस्य मुखमण्डले मुहुर्मुहुर्विविधभावपङ्कजनिचयाः [14]परिवर्तनरङ्गा उदय ते स्म । समयेऽस्मिन् महाराजस्य प्रासादाग्रभागवर्तिन्यां पुष्पवाटिकायां लोकाकुलमना भ्रमितमुखाम्बुजस्य सन् कमपि पुरुषं प्रतीक्षमाण इवेतस्ततो

प्रभृति स्म । समवेक्ष्यायं नरेन्द्रो मनसैवमालपत्– 'किं न खलु प्राप्येत मे वत्सा कुमुदिनी? प्रहरिणोऽपि कथमद्यापि नागताः? वीरसिंहोऽपि न लभ्यते । क नु खल्वयं विलीनोऽस्ती- त्यपि न विद्मो वयम् । प्रभो? किमिदमाकस्मिकं वृत्तम्?' इति चिन्ताचक्रमारूढोऽयं नृपचक्रवर्ती समीरसिंहस्तं [1]स्फाटिकोत्तरोत्तानिकायामुपाविष्टवान् । अत्रान्तरे केनचिद् [2]भटे- नोपगम्य प्रणम्य च सविनयम्-' प्रभो? श्रीमानमात्यवर्योऽत्र [3]भवन्तं दिदृक्षते' इति न्यवेदि । 'सत्वरं तमिह प्रवेशय' । इति प्राप्तप्रभुनिदेशश्चापि शिरो नमयित्वा बहि- र्निरगात् । क्षणानन्तरमुपतस्थे प्राप्तप्रवेशनममात्यवर्यः । तमुद्वीक्ष्यामात्यं पृष्टवान् राष्ट्रपतिः– 'वीरसिंह? किमानीता कुमुदिनी वत्सा' इति ।

वीरसिंहः । देव ? प्रतिवनम्, प्रतिकन्दरम्, प्रतिनिकुञ्जमहं राजकुमारीममार्गयम्; तदपि न लब्धा राजकुमारी । ह्योऽखिलामपि रात्रिमुत्सवाः पर्यन्वेषणा एवास्माभिरत्यवाहि; तदपि न प्राप्ता तस्याः प्रवृत्तिरपि ।

महाराज । किं तदा निष्फलमभवत् युष्माकमन्वेषणम्? हा? किमिदानीं करोमि? हा हन्त? किं पुनर्न लप्स्यते मे वत्सा हृदयानन्दिनी कुमुदिनी?।

वीरसिंहः । देव? अलं [4]शुचा? चिन्तां परित्यज्य चेतसि शान्तिमाकलयतु प्रभुः । चतुर्दिक्षु मया बहवः [5]सादिनः प्रधाविताः सन्ति, निश्चितमेव ते कान्यकुब्जनन्दिनीं त्वरितमुपहरिष्यन्ति–इति मन्ये ।

महाराज. । कथं न्वहं शान्तिमाकलयामि? क्व नु रक्षायां भवेन्मे वत्सा? अपि मागा- धिकज्जले वने? क नु भवेत्सा? हा? क्वचित् विपत्तिजालेऽपि परिपतिता स्यात्?

एवं शोचन्महाराजो मूर्च्छितोऽभवत् । तत एव प्रधानवर्यः प्रतीहारमाहूय शैत्योपचार- मानेतुमादिष्टवान् । क्षणादेवासौ सुगन्धिपानीयमानीय समुपस्थितः । आदाय तत्सुरभि- शिशिरं सलिलममात्यो नरेन्द्रवदनारविन्दोपरि न्यषिञ्चत् । तत. क्षणेनैव महाराजोऽपगतमूर्च्छो भूत्वा पुनर्विलपितुं प्रारभत ।

वीरसिंह । राजेन्द्र? समाश्वसिहि समाश्वसिहि ।

महाराज. । वीरसिंह? न लप्स्यते किंनु मे वत्सा कुमुदिनी?

वीरसिंहः । लप्स्यते सा भगवन्? परं धैर्यं धारयतु धरणीन्द्रः ।

महाराज. । कदा लप्स्यते? अमात्यवर्य? कदा लप्स्यते मम वत्सा? हन्त । क नु विचरति मा विपद्दुहिता मे?।

इत्यनतिवेलं विलपति नरेन्द्रे प्रतीहारः समुपगम्य– 'देव? उपस्थिता तत्रभवती कुमुदिनी ।' इति [6]दर्शपीयूषवर्षिणीं गिरमुदैरयत् ।

'किं किम्? वत्सा कुमुदिनी? क्वाऽस्ति सा?' इत्युदीर्य यावन्महाराज उत्तिष्ठति तावदेव राजकुमारी कुमुदिनी तत्र प्रविश्य पितरं ननाम । 'वत्से? आयाता किंनु त्वम्?' इत्यभिधाय महाराजस्तस्याः शिरः परामृशन् क्रोडे तां घृतवान्-'वत्से?

---

१ स्फटिकमयमासनम् । २ वीरेण । ३ पूज्यम् । ४ शोकेन । ५ अश्वारोहाः । ६ पीयूषमयूरम् ।

किन्ते जातम् ? क्व गताऽऽसीः ? को नु नराधमस्त्वामपहृतवान् ? वीरसिंहोऽयं त्वदन्वेषणार्थमरण्यादरण्यमटित्वा साम्प्रतमेव निवृत्तोऽस्ति । तवैवाभिधानं मम रसनाग्र आसीदिदानीम् । त्वयेहाऽऽगन्तुं कथमपारि ? इति सकलं मे विशकलय्य निवेदय ' इति ।

कुमुदिन्या आगमनं निशम्य राजमहिषी प्रभावती तत्र प्रधाव्यागतवती । वक्षसा चेमां गाढमुपपीड्य तस्याः कुशलं पृष्टवती । दासीभिर्दासैश्चापि पर्यपृच्छ्यत स्वलम् । अथ सर्वान् यथोचितादरं संभाव्य कुमुदिनी पितरं व्यजिज्ञपत्– ' तात ! रक्षको मम कोऽपि योगिराजो बहिस्तिष्ठति तमाकारयतु भवान् । स मे सकलमितिवृत्तं भवते श्रावयिष्यति ' इति । इत्थं कुमुदिनीवचनं निशम्य महाराजो द्वाराभिमुखं गन्तुं प्रवृत्तवान्, महाराजं गच्छन्तं निवार्य कथितममात्यवर्येण– ' प्रभो ! नार्हति प्रभुः परिश्रममङ्गीकर्तुम् । दास एवाऽयं क्षेमकरस्तं योगिराजं सादरमिह समानेष्यति ' इति ।

महाराजस्तु– ' नैवम् । मदीयवत्सलाया रक्षितारं महानुभावमहमेव स्वयं गत्वा सत्कृत्येह समानेष्यामि । भवतु नाम कुलीनोऽकुलीनो वायम् । ' इति व्याहृत्य द्वारदेशमुपगम्य तत्र स्थितं योगिराजमभिवाद्याञ्चके ।

योगिराजोऽपि– ' स्वस्ति श्रीमते महामहिमशालिने महीश्वराय । ' इत्याशीर्वचसा महाराजं संभावितवान् । अथ– ' महानुभाव ! सानुग्रह भगवता निजचरणपङ्कजसम्पर्केण पवित्रीक्रियतां मदीयप्रासादाभ्यन्तरभूमि ' रिति साञ्जलिर्न्यवेदयन्महाराजो योगिराजम् ।

' यदभिलषति राजेन्द्र ' इति निगद्य योगिराजो महाराजेन सार्कं प्रासादाभ्यन्तरं गतवान् । अमुमवलोक्य तत्रत्यो निखिलोऽपि जनः साभ्युत्थानं प्रणनाम । अनन्तरं नरेन्द्रो योगिराजं सह निनाय नित्यनियमसम्पादनाय ।

अस्ति प्रभातसमयः । चन्द्रवतीतरल[1]तरङ्गालि[2]सम्पर्केण शीतलः, [3]उन्मीलन्नवरुचिरमालतीकुसुमकलापरजोभिः सुरभिः समीरो मन्दमन्दं वहति । [4]भगवानम्बरमणिरुदयाचलचालतुङ्गशृङ्गसिंहासनादुत्थायाधुना चराचरस्य जगतो दशां निरीक्षितुमिवात्तु[5]रयमाणोऽपर्युपरि गगने प्रतिष्ठते । मनस्विनो मुनिवरा ब्रह्मविदो ब्राह्मणाश्च संध्यावन्दनादिनित्यकृत्यसम्पादनाय चन्द्रवतीतीरमभिगच्छन्ति । समयेऽस्मिन्महाराजश्रीविजयसिंहः स्वीयं नैत्यिकं विधिं समाप्य प्रासादस्यैकस्मिन् विशालमहालये [6]उपबर्हमेकमाश्रित्य कनककुसुमविचित्रतामेकां [7]सुन्दरतूलिकामाधिष्ठित आसीत् । तदानन्तरममात्यवर्यो वीरसिंहः सेनापतिर्जयसिंहश्चोभौ प्रविश्य प्रणम्य च महाराजं निजनिजासनमधितस्थिवांसौ । अनन्तरं निर्वर्तितनिखिलनित्यनियमो योगिराजोऽपि तत्रोपस्थाय राष्ट्रपतिनिर्दिष्टे[8]हारदमणिबन्धकाष्ठ[9]विष्टरे समुपविष्टवान् । अत्रान्तरे राजकन्या कुमुदिन्यपि पितुः समीपे समागत्य मातुरङ्कमलङ्कृतवती । अथ शान्तिभङ्गं विधाय महाराजः— ' वत्से ! कथयाधुनाऽऽत्मचरितम् ' इत्यवादीत् ।

कुमुदिनी । तात ? तदानीमहं गतचेतनाऽभूवमिति मदपेक्षयाऽधिकमयं योगिराजो भवन्तं श्रावयितुं [1]पारयिष्यति ।

महाराजः । ( सविनयं योगिराजं प्रति । ) भगवन् ? न चेत्काचिदापत्तिस्तदा भवानखिलमस्या वृत्तं मे निवेदयिष्यतीत्यहमाशासे ।

योगिराजः । तदखिलं वृत्तं भवतः श्रोतुं श्रीमतां मनीषितञ्चेत्तत्कथने मम काचनाऽपि हानिः । ततः श्रूयताम्– ' आसीद् वार्तैकयामा [2]यामिनी । सर्वतोऽरण्यनिकुञ्जेषु गावं संलभमम् । समयेऽस्मिन्नहमेकस्मिन् वने व्यचरम् । मार्गभ्रष्टश्चाहं मार्गमन्वेष्टुं व्यचेष्टे । अत्रान्तर एवैकं दीनतामयं चीत्कृतमहमशृणवमस्या बालिकायाः । चीत्कृतश्रवणसमकालमेवाऽहं तां दिशमभिमुख्य समपश्यमेतस्या उपरि बलात्कारं कुर्वतस्त्रीन् पुरुषान् । तेषामन्यतमस्तत्परिवृढोऽस्या उपरि बलात्कारं कर्तुं यावत्प्रवर्तते, तावदहमपि स्वस्थानादुच्छलितो निजभुशुण्डिकयाऽवधिषं तेषां द्वौ पुरुषौ । साम्प्रतमवशिष्टः केवलं तेषामधीश्वरः । चन्द्रहासं निष्कास्याऽसौ मामभ्यधावत् । यावन्मदुपरि स्वकृपाणं चालयति तावदेव झटिति निष्क्रम्य कोषान्मम [3]मण्डलाग्रो दुरात्मनस्तस्य करवालेन संघट्टितोऽभूत् । मदीयखड्गप्रघातेन तदीयकृपाणखण्डराशिर्भूत्वा महीतलं चुचुम्ब । निःशस्त्रमात्मानं निरीक्ष्याथ नराधमो निजप्राणरक्षणाय कान्दिशीको दिशो भेजे । पलायिते तस्मिन्नहमेनां राजकुमारीं सान्त्वयित्वा ' सुशीले ! केऽमी पुरुषा अभूवन् ? कस्य त्वं दुहिताऽसि ? किमर्थमत्र महाभयङ्करे महारण्ये जातं तवागमनम् ? ' इत्यपृच्छम् । इयञ्चाखिलं वृत्तं मे निवेदितवती । अनन्तरं गृहीत्वैनां कथं कथमपि मार्गमन्विष्याहमत्रभवतां सम्मुखे समुपस्थितोऽस्मि । '

महाराजः । ( सक्रोधम् । ) वत्से कुमुदिनि ! केऽमी दुरात्मानोऽभवन् ? ।

कुमुदिनी । ( मन्दस्वरेण । ) तात ! नासंस्तेऽन्ये केचन किन्तु भवतामेव सेनापतिः कलुषात्माऽसौ क्रूरसिंहः, तत्सहचरौ च तौ मानसिंहभयसिंहौ ।

महाराजः । ( साश्चर्यम् । ) आः ! तस्य पुरुषापसदस्यैतावद् विचेष्टितं किमु ? अये ! विदितं खलु मयेदानीमेव तदीयं कपटाचरणम् । ननु लब्धं मया फलं [4]भुजङ्गमपयःपानस्य ! हन्त ! कुत्राऽहं तं क्षत्रियापसदमासाद्य संचूर्णयेयम् ! भवतु । कुतोऽपि नाम तमहं विचेष्यामि; रसयिष्यामि चामुं निजदुरितकर्मणां तीव्रं फलमपि । न जानीते खलु वराकोऽसौ–' मदसि [5]भुजङ्गिनीविक्रीडः कां नु दुर्गतिं गमिष्यतीति । '

सानन्दमित्यमुदीर्य महाराजो योगिराजाभिमुखीभूय निजगाद– ' योगिराज ! अत्रभवतां साहसं निरीक्ष्याहमतितरां प्रसीदामि । महावीरोचितं कृतमिदं कृत्यं भवता । ' इति ।

योगिराजः । राजेन्द्र ! नात्र किमपि मया महद् कार्यं व्यधायि । स्वकर्तव्यपालनमेव केवलं विहितं मया ।

महाराजः । धन्योऽसि योगिराज ? क्षन्तव्योऽयमविनयः । किमपि रहस्यं लक्ष्यते मयाऽत्रभवति । नूनं योगिराजो भवानिति नाङ्गीकरोति मे मनः । ये संसारपरित्यक्तास्तैः

१ शक्ष्यति । २ रात्रिः । ३ खड्गः । ४ भुजङ्गमः=सर्पः । ५ असिभुजङ्गिनी—खड्गसर्पिणी ।

कथं नु शस्त्रं ध्रियेत ? योगिनाऽपि भूत्वा श्रीमता किमिति शस्त्रं गृह्यते ? अतो भवान् निजं वास्तविकं वृत्तं निवेदयिष्यति यदि महानुपकारो भविता तर्हि ममोपरि श्रीमताम् ।

योगिराजः । ( क्षणं विमृश्य ) तथ्यमस्ति राजेन्द्र ! नास्म्यहं योगी वस्तुतः । साम्प्रतमहं कश्चिद् राज्यभ्रष्टो राजकुमारोऽस्मि ।

महाराजः । ( सविस्मयम् । ) किम् ? राजकुमारो भवान् ?

योगिराजः । आम्, राजन् ! राजकुमार एवास्मि । परमिदानीं तु योगिना भूयते मया ।

महाराजः । वरम् । कस्य राजकुमारो भवान् ? क्वास्ति भवतो राज्यम् ? कश्च भवन्तं राज्याद्भ्रंशयत् ? किं कश्चन सपत्न आसीद् भवतः ? आसीच्चेत्तेन कथं राज्यमपहृतं श्रीमतः ? सत्यं ब्रवीतु राजकुमारः । यथासम्भवमहं भवतः सहायतां विधाय समुन्मूलयिष्यामि भवत्प्रत्यर्थिनं ।

योगिराजः । राजेन्द्र ! श्रीमतां वचनं निशम्यानन्दितोऽस्म्यतितराम्, परं सम्प्रति स्वपरिचयं दातुं भवते न पारयामीति खिन्नोऽस्मि नितराम् । अस्त्येदमेव कारणं यदधुनैवाकस्मादीदृशाः प्रसङ्गाः परिपतिताः सन्ति मयि येन निजजीवनचरित्रचित्रस्य गोपनमेव मे बहुश्रेयस्करम् । श्रीमतां[1] मतिनिर्बन्धश्चेदष्टदिनानन्तरमहमखिलमात्मवृत्तमावेदयिष्यामि भवते । यदा मां पूर्णतया परिचेष्यति श्रीमान्, तदा तु सुतरामाश्चर्यमहासागरे निमङ्क्ष्यति भवान् । क्षम्यतामिदानीन्तु ।

महाराजः । वरम् । ईदृशश्चेदभिलाषो भवतो नाहं शक्नोमि प्रष्टुमधिकं भवन्तम् किं तु मदीयमेतावद् वचनं तु स्वीक्रियेत भवतेत्यहमाशासे ।

योगिराजः । शिरसा वहामि श्रीमतामादेश[2]स्रजम् ।

महाराजः । मदीयराजनगरे स्थित्वा भवता स्वच्छन्दमशनपानादिभिरानन्दनीयम् ।

योगिराजः । किमिदं भूत राजेन्द्र ! क्षत्रियपुत्रैः कथमानन्दविलासोपभोगो विधेय ? राजपुत्रैस्तु गोब्राह्मणान् प्रतिपाल्य प्रतिद्वन्द्विनश्च निपात्य निजयशो दिगन्तगामि विधातुमभिलषणीयम् । यः स्वप्रजा न पालयति न स राजपदवाच्यः, अपितु पिशाच एवासौ । यदाहं निजपितुराहृतं राज्यं पुनः सम्पादयिष्यामि, रिपूणां रुधिरैरात्मकरौ क्षालयिष्यामि, यदा चाहं निजाभिलषितं वस्तु प्राप्स्यामि तदैवात्मानमानन्दयिष्यामि । सम्प्रति हि वैरशुद्धिं विना नाऽन्यन्मम किमपि कर्तव्यम् ! !

महाराजः । धन्योऽसि [3]राजन्यकुमार ! धन्योऽसि ! प्रशंसनीयं तव वीर्यम् ! निशम्य तव वचांसि प्रमुदितोऽस्मि नितरामहम् । राजकुमार ! प्रधानसेनापतिपदमर्पयामि तुभ्यमहं निजराज्ये ।

योगिराजः । [4]कपर्दकतुल्योऽस्म्यनेन महाराजस्यौदार्येण ।

महाराजस्तु—'अस्माकं सर्वत्र स्वागतं यदेव दृष्टमस्मदर्शनमेव तत् । विशेषतः प्रातरेव भवताऽप्युपस्थेयम्' इति गदित्वा स्वप्रासादं प्राविशत् ।

१ निर्बन्ध –आग्रहः । २ स्रज्–माला । ३ राजन्य – क्षत्रियः । ४ कपर्दक–अल्पतम् ।

अथाथ तस्मिन् योगिराजोऽपि विजयनगरमवलोकयितुकामो यावदुत्तिष्ठति तावदेव कुमुदिनी तदन्तिकमुपगम्य प्रणम्य च सादरमालपत्— ' राजकुमार ! भवन्तु भवन्तं योगिराजपदेन सम्बोधयिष्यामि । श्रीमतामिह स्थितिरभूदिति परमानन्दसमुद्रे निमग्नाऽस्मि । पूर्वमेवाहमकथयं मदीयकथनमङ्गीकरणीयमेवेति ।

योगिराजः । ( सस्मितम् । ) कोऽसौ मन्दभागधेयो नाङ्गीकुर्याच्छ्रीमत्याः कथनम् ? विलक्षणा ते माया ! मधुरमधुरमालपन्त्या त्वया [1]निगडित एवाऽस्मि । सफलितमन्ते त्वदीयमेवाभिलषितम् । अये ! अनुजानीहि माम् । अनुष्ठेयमावश्यकर्तव्यं मयेदानीम् । " इत्यभिधाय गन्तुमारेभे योगिराजः । अथान्तं तमनुरुध्य प्रोवाच कुमुदिनी— ' योगिराज ! स्थीयताम् । चिरन्तनं क्षणम् । दर्शयामि श्रीमन्तमहं स्वप्राणप्रियचन्द्रस्य चित्रगतां मूर्तिम् ।' इति प्रोच्य झटिति प्रासादान्तर्गृहमभिगम्य क्षणेनैव हस्ते चित्रमादायोपस्थितवतीयम् । योगिराजहस्ते समर्प्य चेदं चित्रमभाषतैषा—' पश्य योगिराज ! पश्य । अयमेव मे प्रियतमः । असावेव मम प्राणेश्वरः । कियती मनोहारिणी मूर्तिरमुष्य ! अधुनैव विवक्षतीव ननु ! परमयमविश्वसकः खलु ! मायाविनी चास्याक्षिणी ' इति ।

क्षणं निरीक्ष्यामूं चित्रगतां मूर्तिमसौ योगिराजो मनस्येव— ' अहह ! कुमुदिनि ! मामेव चिन्तयसि निरन्तरम् । नन्वहमेवैकाकी दुःखीति विभावितवान् किन्तु नैव ! कुमुदिनि ! त्वमपि दुःखिन्यसि । हा ! इदानीमेवाहं त्वां सुखयितुं शक्नोमि, परमनवसरोऽयमात्मानं प्रकाशयितुम् । ' इति समालप्य विमृश्य च पुनस्तच्चित्रं कुमुदिन्यै समर्पयन्नवादीत्— ' अतिरमणीया खलु मूर्तिरियम् ' इति ।

पाठकमहोदयाः ! विदितमेव स्यादत्रभवताम्— ' कोऽयं योगिराज इति ।' स एवायमजितदुर्गनाथो राजनगरस्य यौवराज्येऽभिषिक्तः कुमुदिनीवल्लभो निजानुजरणवीरस्यान्वेषणाय निर्गतो राजकुमारश्चन्द्रसिंहः ।

योगिराजः । कुमुदिनि ! अनेनैव पुरुषेण साकं तव पाणिग्रहणमङ्गलं सम्पत्स्यते ।

कुमुदिनी । किम् ! किं ब्रवीति योगिराज ! अपि लप्स्यते मम चन्द्रः ! अपि फलिष्यति मनोरथवल्लरीयमस्या निराश्रयबालिकायाः ?

योगिराजः । आम् । फलिष्यति । प्रतिजानेऽहम्— ' कुमुदिनि ! यदि कतिपयदिनानन्तरमहं तव चन्द्रं गृहीत्वा त्वदुपकण्ठमुपस्थापयिष्यामि; किन्तु पुनरयं गतश्चेन्न मे दोषः ! ।

कुमुदिनी । कथं गच्छति पुनः ! अये [2] तन्नु तावदहं निगडयिष्यामि यदसौ गमनवार्तामपि न कुर्यात् ! ' ललनोपकण्ठगता दर्पशालिनोऽपि पुरुषा नम्रीभवन्ति ।

योगिराजः । ( स्वगतम् । ) नूनम् । नास्ति चन्द्रस्य शक्तिर्यदसौ त्वदन्तिकादितः स्थितो भवेत् ? । ( प्रकाशम् । ) अये ! अवश्यं तव चातुर्यम् । कुमुदिनि ! त्वयाऽप्यहं वञ्चितो ननु ! ।

कुमुदिनी । किमत्र वञ्चनं नाम ! मया तु सहजमेवोदीरितम्— ' चन्द्रो मे यदि लभ्येत

---

१ निबद्धः । २ आः ।

नैवासौ पुनर्मत्तो वियुक्तो भविता तदेति ' । किमत्र मयाऽनृतमवोचि ? ।

योगिराज । तपस्विनासि बाले[१] सत्य तवोदितम् । अप्यनुमन्यसे मां गन्तुमधुना ?

कुमुदिनी । बाम् । सुखं गम्यतां पुनर्दर्शनायाज्ञसा । योगिराज ? किमिव वच्मि ? भवन्तं विलोक्यैव मम चन्द्रोऽयं स्मरणसरणिमुपतिष्ठते । नूनं भवन्मुखारविन्दमिव सुन्दरं मदीयचन्द्रस्य ललितारमितं वदनाम्बुजं राजते । योगिराजस्तु– ' बाले ? भ्रान्ताऽसि खलु त्वम् ? ' इत्यभिधाय सन्ध्यावन्दनादिनित्यकर्मसम्पादनाय ततो निर्गतवान् ।

अथ नित्यकर्मणो निवृत्य भोजनं विधाय काषायवासांस्यपहाय परिधाय सुन्दरराजोचि तवस्त्राणि सत्त्वरेऽपि सायसमये पर्यटितुमयं विजयनगरे निर्ययौ । अथ शान्तिमयेऽस्मिन्नुप मये विजयनगरे प्रादुरासो[२] नक्षत्रमालालङ्कृता प्रफुल्लकुमुदनेत्रा सुन्दरचन्द्रिकाधवला[३] म्बर धारिणी मनोहारिणी चन्द्रमुखी निशादेवी । ईदृशे रमणीये समये चन्द्रसिंहो दुर्गाद् बहिर्निरगात् । सहसैव चास्य मुखात्– ' कीदृशी निष्कलङ्का पवित्रबालिका । ' इति शब्दा निर्गता । कुमुदिनीविचारे निमग्नमासीन्मनः सम्प्रति चन्द्रस्य । निष्क्रम्य दुर्गादय सागरारण्यं प्रविश्य चन्द्रमसः प्रकाशे कमनीयकाननराजिशोभामवलोकयाञ्चक्रे । दुर्गात् क्रोशद्वयमितमन्तरालमतिक्रम्याऽयं महतीमेकां शिलामालोक्य तदुपर्युपाविशत् । अथ परितो विलोकयन्नयमगादीत्– ' अहो ? कियत्सौन्दर्यं विभावर्याः ? कियती मनोहारिणीयं दृश्यते चान्द्रिकामयी यामिनी ? प्रभो ? विचित्रा तव लीला । अहह । प्राणिमात्रा इदानीं सुखेन निद्रापरतन्त्राः सर्वेऽपि ? किमिवद् मदीयं मन्दभाग्यं हृदयं न बिभर्ति शान्तिम् । [४]हन्त । यावन्न लप्स्यतेऽसौ प्रियबन्धुर्न तावदिदं [५]स्वान्तं शान्तं भविता । अपि पवित्रहृदयां नाथरिणि कुमुदिनि ? त्वत्सम्बन्धेऽपि कियच्चिन्तयेयम् ? अहह ! अहं चन्द्रसिंहोऽस्मीति यदि त्वां कथयेयं कियान् महानानन्दस्ते जनिता ? ( विचिन्त्य । ) प्रिये कुमुदिनि ? मदर्थं किमर्थं क्लिश्यसि, ताम्यसि, खिद्यसे तप्यसे च । परं पापात्मद्वयोऽयं तव चन्द्रः सन्नि हितं सदपि नात्मद्वयमार्द्रयति । ( विमृश्य । ) प्रिये ? मा शोची । सुखयिष्यामि त्वामहम् । त्वरीकरिष्यतु नृसिंहस्य यदाऽयं वक्षः स्थलं विदारयिष्यति तदानीमेवायं तव चन्द्रः शान्तिमन्तः करणेऽपि स्थापयिष्यति ।

अथ चन्द्रसिंहः क्रोधेन समुत्थाय– ' परं स नराधमः क्व गतः इति न विज्ञायते । दुरात्मन् ? सर्वत्र स्वमन्तर्हितो जगतः किन्त्वहं त्वां गवेषयित्वा सद्य एव यमराजनगरातिथीं करिष्यामि । ' इति प्रोच्य कृपाणं कोपेन परामृशत् । चरणप्रहारसमकालमेवाश्वोपयोगेन शिलाऽकस्मादुच्छलन्ती दूरत उत्पतिता । एतद्वृत्तोत्थ चकितोऽभवच्चन्द्रः । अत्र किमपि रहस्यमस्तीति विचार्य भीषितान्तरात्मा नितरां निभाल्यायमभूत । नाऽजानात् इति किमपि विद्युत् । मुहूर्तं यावद्वाऽचिन्तयद्यो गम्भीरं विवरं भूमौ कर्तुं परित्यागयतवि [६]नाविन्दत

१ न स्तम्भ तदः सतर्कि ईदृशं रेखाविन्ता इत्यर्थ । २ अभवत् जनन वदनम् । ३ ' ह न हर्ष-गुरुतरं दो व व म रसम् हेयादर्दे ' । ४ ' स्वान्तं हृन्मानसं मन ' । ५ आलमत ।

किमपि । अथ निराशः सन्नेव ऊचे– ' किं तावदस्य कारणम्? गवेषणीयमेव मयाऽस्य रहस्यम्? ' इति निश्चित्य शिलासमीपमुपसृत्य सूक्ष्मदृशा तां निरैक्षिष्ट । मुहूर्तं यावदभितो विलोकमानस्तस्यां शिलायां लग्नमेकं लोहकीलकमद्राक्षीत् । कथमस्य सम्बन्धः शिलया सहेति परीक्षितुकाम एव कीलकमपोदयत् । कीलकयन्त्रापोहनक्षणमेवाऽजनि महाभयङ्करो निःस्वनः । यदाश्चर्यं चमचकार चन्द्रः । [1]निह्रादेन सार्धमेवैकहस्तमितोच्छ्रायमुत्थितेयं महती शिला ।

अतिमहतीमिमां शिलां निरवलम्बामवलोक्य विस्मयमहाम्भोधौ निममज्ज । अथाऽपि ददर्श तस्या अधस्तादेकमा[2]रोहणम् । [3]दृषन्मयी चास्य सोपानपरम्परा । ततोऽमुना सोपानैरवतर्तुमारेभे । यथैवानेन पञ्चदशे सोपाने पदं निदधे तथैव घोरशब्दपुरस्सरं सा [4]निरवलम्बा शिला पुनर्निजस्थानं प्रपेदे । पिदधे चामुया कन्दराया द्वारम् । यावच्चिरात्कथाऽभूदियं शिला तावच्चन्द्रमसेयं कन्दरा प्रभासिताऽभवत्परमिदानीं दरीद्वारोपरोधेनाभ्यन्तरे संतमसं संवृत्तम् । तथापि धैर्यं धारयन् धीरधौरेयोऽयं चन्द्रकुमारः सोपानैः पुनरवतर्तुमारभत । शतं सोपानान्यवतीर्य– ' सम्पूर्णमारोहणमवतीर्णवानहमिति ' निश्चितवानसौ । अथान्धकारे करं चालयतोऽस्य हस्तः पाषाणभित्तिकया स्पृष्टः । तदाश्रयेणैवायमग्रे प्रचलितः । स्तोकमन्तरं गतस्यास्य हस्तो दारुरचितकपाटे लग्नः । यत्नेनासौ [5]तदररमाजघ्ने । परं नापावृतमिदम् । अनन्तरमेव यावद्बलं द्वाभ्यां कराभ्यां कपाटमुद्घाटयितुं प्रायतिष्ट । नापावृतं तथापि । ततोऽयमतिनिराशः सञ्जिन्नस्तत्र करौ चालयामास । पाणिं परिचालयतोऽस्य करे द्वारसमीप एव प्रतिष्ठापिता काष्ठपुत्त्रिका लग्ना । आनन्द्य चन्द्रस्तां परीक्षमाणोऽपि न ज्ञातवान् किमपि । ततः परमखिन्नोऽसौ– ' अयि प्रभो! किं करणीयमधुना? ' इति समुदीर्य मलिनमुखः संत्रस्य तस्याः पुत्तलिकायाः शिरसि हस्तं निपात्य समशयिष्ट । पातिमात्रेणैव अकालमेव सा काष्ठपुत्रिका वर्तुलमभ्रमीत् । तत्क्षणमेवापावृतं द्वारम् । सानन्दः सपदि चन्द्रो धैर्येण द्वारं प्रविष्टवान् । प्रवेशानन्तरमेव पुनर्द्वारं [6]संवृतमभूत् । अथाग्रतो गच्छता चन्द्रसिंहेनाभ्यन्तरे चन्द्रमसः प्रकाशो दृष्टः । ' कुतोऽयमिह चन्द्रप्रकाशः? ' इति वितर्कयन् परीक्षाञ्चक्रे । ऊर्ध्वं विलोकयताऽप्यमुना नालोकितो रजनीवल्लभः । ' कस्मादयं प्रकाशस्तावत्? ' इति चिन्तयन्नसौ सावधिकः सपदि प्रचलितः । प्रकाशं गच्छत एव तस्य नेत्रगोचरमयासीदुपलनिर्मितं मन्दिरमेकम् । वर्तुलपटमण्डपाकृतिं [7]विडम्बयति स्म नन्वस्य [8]कृतिः । परितोऽस्य पाषाणमयी भित्तिः । अमुष्मिन्नपि केवलमेकमेवागुरु द्वारम् । नासीदत्र कस्यापि जनस्य निवासोचितं स्थलम् ततः किमपि महाघोरं कृत्यमाचरितुमनुकूलमिदं मन्दिरम् । तिष्ठन्नेव चन्द्रो यावदित्थं विचिन्तयति तावदेव खलु चमत्कृतोऽसौ । यतोऽयं स्थितोऽभूत्ततो हस्तद्वयं पश्चादपसृत्य सपदि निजचन्द्रहासं कोशाद् बहिराचकर्ष । तस्य मन्दिरस्य मध्यभागे काचनाकृतिर्दृष्टोऽमुनेत्येव सत्वरेयं चमत्कारी-

१ रवेण । २ ' आरोहणं स्थलसोपानम् ' । ३ पाषाणनिर्मिता । ४ निराधारा । ५ अररं कपाटम् । ६ मुद्रितम् । ७ अनुकरोति स्म । ८ रचना ।

चन्द्रसिंह । परं चन्द्रप्रकाशे सूक्ष्मदृशा निरीक्ष्यानेन– ' स्त्रियेयमाकृति ' रिति[१] ज्ञायि । ततः करवालं कोषगतं विधाय स्वयं तस्या आकृतेरभ्यर्णं ययौ । समीप[२]गताऽनेन ' इयं कस्याश्चन देव्या आकृतिरिति ' विजज्ञे । अथ पर्यैक्षिष्ट तां मूर्तिमभितः । आसीदियं काष्ठमयी मूर्तिः । पाणिना परामृशताऽमुना परितः प्रच्छन्नमेकं यन्त्रकीलकमाधिगतम् । तन्निर्वर्ण्यं नितरामाश्चर्यमित एष तत्कीलकमुत्पीडयाम्बभूव । तत्क्षणमेव युगपदपावृतमररयुगलमिवैनस्या मूर्तेर्द्वे [३]शकले अभूताम् । सान्तरालेयमासीदभ्यन्तरे । चन्द्रस्तु– ' किं प्रयोजनमस्या भवेत् ? केनेयमत्र प्रतिष्ठापिता स्यात् ? अथ कोऽप्येनामर्चयति न वा ? ' इति विचिन्तयन्नपि नावागमत् किमपि तत्त्वम् । ततोऽयं तां काष्ठप्रतिमां यन्त्रकीलकेन यथापूर्वमस्मुद्रत् । आसीदेकं समचतुष्कोणं प्रतिमाग्रतः कुण्डम् । इत्थमखिलमभिवीक्ष्य चन्द्रसिंहस्तु मन्दिराद् बहिर्निष्क्रम्य समुपाजगाम च वरमेकमगुरुः । ' किमर्थमिदमखिलमिह गुहाकन्दरे विनिहितमिति विमृशन्नेव तत्र शिलातल्पमुपाविष्टवान् ।

अधुनाऽयं निषीदन्नेव यावद् विमृशति तावदेवैका मनुष्याकृतिं दूरतस्तदभिमुखं शनैः शनैरपसर्पन्तीं ददर्श । दृष्ट्वा चैनां चमच्चकार चन्द्रसिंहः । रोमाञ्चितमभूदस्य वपुः । भिया चाप चकम्पे । अहो आश्चर्यम् ! य एष भुशुण्डीशत[३]शतघ्नीनिर्ह्रादसहस्रेभ्योऽपि चण्डचन्द्रहासघारचालनेभ्योऽपि च न बिभीयात्सोऽधुना भयेन वेपते । अथ धैर्यमाधाय हृदि करे च करवालं गकलय्य–' आगच्छन्तीयमाकृतिः कुत्र प्रयाति ? किंवानुतिष्ठति ? ' इति विज्ञातुकाम एव ततोऽनतिदूरं वर्तमाने पाषाणोत्कीर्णदरीगृहे निलीय घटिष्यमाणा घटनामैक्षिष्ट । आगच्छन्तीयमाकृतिर्यत्र चन्द्रो न्यलीयत ततोऽभ्यर्णमेव विद्यमानायां शिलायां दीर्घं निश्वसती निषण्णा । आसीत् कस्यचिद् बालकस्येयमाकृतिर्वयसा चतुर्दश मितं वर्षं स्पृशन्ती । तेन पुत्रामित्र वमाति स्म चास्य वदनबिम्बम् । आकृत्या [४]राजवंश्य एव विभाव्यते स्म । सुन्दरस्यास्य बालस्य करचरणं लोहशृङ्खलया नियन्त्रितमभवत् ।

गुहागृहनिलीनश्चन्द्रस्तु– ' ईदृशो बालः केन [५]नियन्त्रितः स्यात् ? अप्यपि नाम्वकम्पि शिशुं तेन ! ' इति निश्चिन्वयन्नास्त ।

क्षणानन्तरमयं बालः – ' [illegible] प्रभो ! अद्यैव विलीयेत किंतु मम जीवनलीला ? किमयं पितेव मदीयबलिदानमयं नृशंस ? अहह ! कथं नु सहिष्यते मयेदं कष्टम् ! रे चाण्डाल नृसिंह ! मादृशो बालकस्य कण्ठे [६]निस्त्रिंशं निपातयतस्ते करुणा नैव जनिता किंतु ? किमन्ते त्वं मां निहन्तैव ? अहह ! निजप्राणत्राणार्थं कियत्करुणामयमहं त्वां प्रार्थितवान्, परं त्वदीयं वज्रमयं हृदयं नैव द्रवीभूतम् ? प्रत्युत तिरस्कृतवानसि माम् । हन्त ! ! क्षणिकमेव जीवनमधुना । मरणीयमेव मयाऽन्तत ' इति परमेव रुरोद ।

---

१ गतदर्शा । २ दारुण खण्डम् । ३ ' तोप ' इति भाषा । ४ राजवंशी । ५, निबद्धः । ६ खड्गेन तु निस्त्रिंशचन्द्रहासासिरिष्टयः ' ।

ततश्चन्द्रसिंहोऽमुष्य बालकस्येदं करुणाजनकं भाषणं निशम्य स्वस्थीभूय मनसि विचिन्तयामास– ' नियतमेव नृशंसस्य तस्य वसतिरिहैव भविता ? स एव दुरात्मा निरागसं बालमेनं देव्या बलिं रचयितुमानीतवानिति शङ्के । रे नृशंसहतक क्रूरसिंह ? नायं मनोरथस्ते फलिता ? रक्षिष्याम्यहं निराधितं बालमेनम् ' इति ।

पुनरसौ बालकोऽभ्यधात्– ' नैव नैव ! तस्य पापस्य हस्तेन तु न माणीयम् । किं करोमि ? शस्त्रमपि न विद्यते मदन्तिके; अन्यथा प्रादर्शयिष्यं स्वक्षत्रियत्वममुं नृशंसम् । हन्त ! निरशोऽस्मि, निराश्रयोऽस्मि । ऋते देवदेवाद् दयालोर्नास्ति कोऽपि मे सहायकः । अये ! संज्ञानिरतोऽस्मि साम्प्रतमायसमङ्‌खलाभि । वद्धनीतोऽस्मि निजामर्यादापावि । ( विचिन्त्य । ) तद्देहि । तस्य पुरुषापसदस्य हस्तान्मरणापेक्षया स्वमस्तकं शिलायामस्फाल्य मृत्युमाह्लोकाद्विमुक्तो भवामि । ' इति विचार्य मूर्द्धानमाहन्तुमुद्यतवान् । यावदसौ शिलायां शिरो निपातयितुमुद्यतस्तावदेव चन्द्रसिंहो गुहाया बहिर्निष्क्रम्य पृष्ठतोऽस्य करौ जग्राह, जगाद चैनम्–' कुमार ? नेदानीं ते मरणवेला ' इति ।

कुमारः कम्पितस्वरेण सभयम्– ' को नु श्रीमान् ? शत्रुमित्रमुतवामुष्य दुर्गतस्य बन्धु ' रिति पृष्टवान् । सान्त्वयन्नमुं चन्द्रसिंहः– ' मा भैषीः । त्वदीयप्रार्थनां निशम्य परमेश्वरोऽयं तव रक्षणाय मां प्राहिणोत् । तन्न कुरु भयम् । नैवास्ति मम रक्षायां किमपि ते भयम् । दुरात्मनस्तस्य पाशादहं निश्चितं त्वां मोचयिष्यामि ' इत्याचचक्षे । एवं चन्द्रभाषणं निशम्यायं कुमारः स्वस्थीभूय दीनवदन – ' को नु खलु श्रीमान् ? ' इत्यन्वयुङ्क्त । चन्द्रसिंहस्तु – ' कथयिष्यामि त्वामहं, तावदितो बहिर्निर्गम्य ' –इत्यभिधाय तस्य करचरणगतौ शृङ्खलौ शकलीकृत्यास्य करं गृहीत्वा प्रचचाल । प्रचलन्तमेनमवरुध्य कुमारः ' विरम्यतां क्षणम् । अग्रे महानन्धकारो वर्तते । पन्थानमपि नोपलक्ष्यते श्रीमता । तदिह स्थीयताम् । दीपकं प्रज्वाल्याहमिहानयामि ' इत्यवदत् । व्याकुलीभूय चन्द्रसिंहः ' कुमार ? ईदृशे भयङ्करस्थले कथं प्राप्येत दीपकः ? ' इति पृष्टवान् ।

कुमारः । एतस्मिन् भयावहस्थले निवसतो मम पञ्चहायनानि व्यतीतानि इति सकलमप्यत्र वेद्मि वृत्तम् ।

चन्द्रसिंहः । ( सविस्मयम् । ) तत् किमत्र ते बन्दीकृतस्य पञ्च संवत्सरा अतीताः ?

कुमारस्तु– ' आम् ! श्रीमन् ? अत एवाहमस्य दरीगृहस्याभिज्ञातोऽस्मि । बहिर्निर्गन्तव्यास्ता निश्चिन्तमनसाऽऽलपिष्यावः । यतोऽत्रावयोरुपरि कदा नु का विपत्तिरापतेदिति न विज्ञायते । तदावाभ्यामितोऽधुना यथासम्भवं शीघ्रमेव बहिर्गन्तव्यम् ' । इति समुदीर्य सत्वरं द्रुतं गत्वा क्षणेनैवैकं प्रज्वलितदीपकमानीतवान् । दीपप्रकाशे ततोऽग्रतः प्रचलन्तावेतौ तस्यैव दारुमयद्वारस्य समीपमागत्य स्थितौ । यतो द्वारं कथमुद्घाटनीयमिति नाजानाच्चन्द्रः । अन्तः प्रवेशसमये [illegible] प्रविष्टवान्, परमिदानीं बहिः कथं निर्गन्तव्यमिति विचारयन्निखिलस्तत्र निभालयाञ्चकार । किन्तु नागतं नयनगोचरं किमपि । आगमनकाले केवलं काष्ठपुत्तलिका-

शिरसि हस्तं निक्षिपत एवामुष्य द्वारमपावृतमभूत् । परमिदानीं तत्कथमुद्घाटनीयमिति चिन्तापरवशोऽभूदसौ । चिन्तयन्तमेनं निरीक्ष्यायं बालोऽग्रे समुपेत्य--' न चिन्तनीयं धीमता । जानाम्यहं द्वारमपावरीतुम्; ' इत्यभिधाय निजकक्षगुटिकातोऽसिधेनुकां निःसार्य कुब्जीभूय कपाटरन्ध्रे रंहसा प्रावेशयत् । ईदृशमस्य बालस्याबालविक्रममवलोक्य मनसैव हर्षश्चन्द्रसिंहः-- ' कुमार ? यादृशस्त्वं सुन्दरोऽसि तादृगेव पराक्रमशाल्यपि भवसि । हा ? त्वादृश एव विक्रमशाली निष्कलङ्को मम बन्धुर्नष्टः '। इति निगद्यायतं निरश्वसत् । एतस्मिन्नन्तरेऽसौ कुमारोऽसिधेनुकासाहाय्येन द्वारस्य यन्त्रकीलकमन्विष्य तरसा तदुपपीड्य तत्कालमेव द्वारमपावृणोत् । उभावेव ततो बहिर्निर्ययतुः । द्वारमदः पुनः पूर्ववत्संवृतमभूत् । अथेमौ तदेवारोहणमुपेयिवांसौ । ततश्चन्द्रसिंहो व्याजहार कुमारम्— ' भ्रातः ? आवामियदवधि निरन्तरायमागतौ; परमग्रे बहिर्निर्गमनमितोऽतिदुष्करं वर्तते । यतोऽस्य सोपानस्य शिरसि निहिताऽस्ति विशाला शिला; सा च ततः कथमपसारणीयेति नावगच्छाम्यहमिति । '

' तदप्यहं जानामि । पञ्चाशीतितमे सोपाने वर्तते एकाऽन्तर्हिता यन्त्रकीलिका । ' इति न्यवेदीत्कुमारः । इदानीमेवाशासीच्चन्द्रो यत्— ' नूनमस्मिन्नारोहणे शतं सोपानानि सन्ति । यदाहं पञ्चदशे सोपाने समागच्छं तदैव सा शिला द्वारं न्यरुणत् । अतस्तस्मिन्नेव पञ्चदशे सोपाने—इव आरोहता पञ्चाशीतितमे सोपाने—तया यन्त्रकीलिकया भाव्यम् ' । अथ सोपानानि गणयन्तावितावारोहणमारुरुहतुः । यथैवेमौ निर्धारितं सोपानमुपपद्यौ तथैवासौ कुमारो यन्त्रकीलिकां विचित्य तां ¹रंहसा समपीडयत् । उपपीडनक्षणमेव घोररवेण समं सा शिला समुच्छलन्ती समपतदेकतः । एतौ चाभौ सानन्दं बहिर्निर्जग्मतुः । अथेयं शिला पुनर्निजस्थलमलङ्कृतवती ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ ब्रह्मचर्यदावकसमीप्ये कुमुदिनीचन्द्रे द्वितीया कला ॥ * ॥

---

## अथ तृतीया कला ।

" अगाधस्य प्रवाहे किं कायक्षालनसंभवे. ।
विराट् भागीरथीस्पर्धी योऽसौ मूल्यविवर्जित ।" ( पञ्चतन्त्रे )
" संतानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने ²प्रेयसि दुःसहानि स्रोतः सहस्रैरिव ³संप्लवन्ते ॥ " ( उत्तररामचरिते )

---

१ वेगेन । २ प्रियतमे । ३ महोर्मिवन्ति ।

" सूरेषु मैत्री मुदिता सदृशे कृपा मुहुः प्राणिषु दुःखितेषु ।
येषां न ते कस्य भवन्ति वन्द्याः कौशेयकौपीनभृतो मुनीन्द्राः ॥ "

( नटचम्पाम् )

" सम्पत्तौ च विपत्तौ च महतामेकरूपता ।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ " ( पञ्चतन्त्रे )

अथ चन्द्रसिंहो वीरकुमारमनुमितः सह नयन् कियन्मुहूर्तैरेव विजयनगरदुर्गमुपाजगाम । तदीयपक्षद्वारेणाभ्यन्तरं प्रविश्य प्रासादे स्वस्थानमाययौ । तत्रागन्तारं कुमारमेनं सत्कृत्य सुखासन्दिकामेकामासेदिवान् । अभ्यागतञ्च कुमारमासनमनुकूलस्यायामासन्द्यामुपवेश्य–'भ्रातः! किमभिधानं ते ? ' इत्यभाषीत् । ममापि– ' मां रणवीरं वदन्ति जना ' इत्युदचारीत् ।

' एवं किमु ? ' इति व्याहृत्य चन्द्रसिंहो विस्मयाकुलेन चक्षुषा क्षणमेकमहं निरीक्ष्य पृष्टवाँश्चायम्– ' कुमार ! किन्ते पितुर्नामधेयम् ? कश्च त्वमसि ? इति धीरं मां निवेदय । मा स्म मामधिकं संशयगर्ते निरुन्धाः । ' इति ।

रणवीरः । ' रणवीर ' इत्यभिख्यातोऽस्मि मन्दभागधेयः । आसीत्– ' चन्द्रसिंह ' इति प्रख्यातो ममैको वीरवरो ज्येष्ठबन्धुः । अखिलभुवनव्यापिपराक्रमशोभिनो महामहिमशालिनोऽजितदुर्गाधीश्वरस्य महाराजशङ्करसिंहस्य कनीयान् पुत्रोऽस्म्यहम् ।

चन्द्रसिंहः । ( सानन्दाश्चर्यम् ) अहो ? विलक्षणा तव लीला ! ! वत्स रणवीर ? एहि एहि । परिष्वजस्व माम् । तवैवाहं बन्धुश्चन्द्रसिंहोऽस्मि ।

रणवीरः । ( साश्चर्यम् । ) कः को नु भवतु ! ! रक्षको मम मदग्रजन्मा आर्यश्रीचन्द्रसिंहस्ततः किमु ? ( इति सानन्दमालिङ्गति । )

चन्द्रसिंहः । ( गाढमालिङ्ग्यैव । ) अयि प्रियतमबन्धो । अयि मदीयहृदयानन्द ? चिरकालतोऽहं मे त्वनन्नावासमेवाद्य सम्प्राप्तम् । वीर ! इयं ते दशा ! भवतु । न चिन्त्यं खलु ? स्वामीत्यवस्थं पितातुरहं निश्चितमेव वैरं [1]निर्यातयिष्यामि । तन्निवेदय मे– ' कियद्रूपं त्वामयमत्यां पीडयाञ्चकारेति । '

रणवीरः । आर्य ? यदाऽऽर्य दुर्गतो मामवन्तं स्वचिन्त्यवतः किञ्चिद्दूरं ममौ धेन्या– ' वत्स रणवीर ! इत आगम्यताम्, गृहाणायं प्रसादः । ' इत्याकार्य मां [2]शर्करामादायत् । शर्करामक्षणमात्रेणैव मम चक्षुषोरग्रतोऽन्धकार इवाजनि । क्षणेनैवाहं निःसंज्ञीभूय भूतलेऽपतम् । अथ जागरितोऽजानिषम् ' कुत्रचिदहं भयङ्करस्थले तिष्ठामीति । ' यतो गुरुगृहान्तो भवान् यद्दिने सारयामास तस्मिन्नस्थलेऽहं भवन्तो दक्षाधमकार्यं परं कोऽपि मानवस्तत्र नावालोकि मया । इतस्ततोऽहं यावत्तत्र विचरामि तावदेव क्रूरसिंहमहं स्वमस्तुसमायान्तमवालोकयम् । एतमवलोक्याऽहं प्रमुदितहृदा तमालिङ्गितुमभ्यधावम् । परं यथैवाहं तदन्तिकमगमं तथैवायं दुरात्मा मां कोपेन दूरमपसार्याऽभूय च– ' रे बाल ! दूरमपसर ?

---

1 धीधयिष्यामि । 2 शर्करा–खण्डविकारः ।

त्वमिदानीमस्य जगतः किञ्चित्कालमेवातिथिर्भवसि ' इत्यवादीत् । नाहमयोधिषं मस्य कथनं किमपि । पुनरहं तम्– ' नृसिंह ? किमर्थं मामिहाऽऽनीतवानसि ? नय मां मत्पितुः समीपम् ' इत्यचकथम् । ततः स दुरात्मा— ' नैवाधुना त्वं निजपितुरन्तिकं गन्तुं शक्ष्यसि ? कियत्कालानन्तरमेव चण्डिकायै त्वामुपहरिष्यामि ' इति मामूचिवान् । ईदृग् वचनमाकर्ण्या-हमादावबिभयम्, परं पश्चाद् धैर्यमाकलय्य– ' नृसिंह ? अपि मारयिष्यसि माम् ? अये ? यदा मे तातस्त्वाम्— ' क नु गतो मम वत्सो रणवीरः ? ' इति प्रक्ष्यति । किमुत्तर-यिष्यसि तदा त्वम् ? किंनु खलु रे ? तवापराद्धं मया ? ' इत्यवादिषम् ।

ममेदृशं भाषणं निशम्यासौ [1]जलंगमः परुषं रवारणः सन्– ' प्रोच्यालं रे बाल ? स्मर स्मरहरं स्मरणीयश्चोत्तिष्ठेत्' ! पिता भ्राता च दृष्टव्यौ यदि [2]त्रिदिव एव द्रक्ष्यसि ! कियता दिनेन तावपि तवान्तिकमागन्तारौ । रे केसरिसिंह ? यस्त्वमिमं नृसिंहं राजसभायां सर्वजनसमक्षमन्वाशासीस्तदल्पेनैव [3]मेहसा प्रतिकरिष्येऽहम् । दुष्ट ? तव रुधिरपानाय भृश-मातुरा मे चण्डिका ' ! ' इति [4]व्याहार्षीत् । अथ कोपेन वेपमानोऽयं समीपवर्तिनं जनम्– 'बालमेनमधुनैव देव्या बलिं विधास्यामस्तदस्य स्नानादिविधिमनुष्ठाय सज्जीकारया-मुम् । एष आगतोऽहम् । ' इत्यादिश्य ततः प्रययौ ।

प्रयाते तस्मिन् स पुरुषो मां स्नपयित्वा सुन्दरवसनालङ्करणैरलञ्चक्रे । कण्ठे स्थलकमल-मालामासञ्ज । ललाटतलञ्च कुङ्कुमाञ्चितमकरोत् । अथावसितेऽस्मिन्नखिलकर्मण्यहमपृ-च्छममुम्– ' बन्धो ? किंनु खलु ममेदानीं सव र्यते ? अपि निहन्ता मामयं दुरात्मा ? कथय । बन्धो ? कथय । कोऽपि नास्ति सम्प्रति मदीयः । त्वमेवासि मे सहायः । तदये प्रियबन्धो ? मदीयपरित्राणाशा सम्प्रति वरीवर्ति न वेति ब्रूहि ' इति ।

इत्थं मदीयमालपितं कर्णे कृत्वाऽसौ नराधमो मां [5]सोत्प्रासमुपहस्य वक्तुमुपचक्रमे– ' परित्राणाशा ! ! त्यजेदानीं रे [6]डिम्भ ? निजरक्षणाशाम् । अधुनैव महाराजश्रीनृसिंह उपस्थाय त्वां [7]देवीसपर्यां निर्वर्तयिता । ततस्तत्राग्निकुण्डे धगधगिति दन्दह्यमानानरुणा-रुणलोहकीलसंदंशेषु प्रवेश्य निष्कासितेन तेन [8]पिशितेनायं [9]श्रीवैश्वानरमाराधयिष्यति । तदनु निष्कृत्तस्य [10]तवोत्तमाङ्गस्य [11]कवोष्णरुधिरैरेव चण्डिकादेवीं [12]प्रीणयिष्यति ' इति नावगतं खलु त्वया ! ' इत्युक्त्वा साट्टहासं हसितवानसौ नरपिशाचः । अत्रान्तरे नृसिंहस्त-त्रागत्य ' तेजस्विसिंह ? अपि सज्जितमखिलम् ! ' इत्यप्राक्षीत् । एष च प्रणम्य– ' आ धीमन् ? ' इत्युवाच । तदनन्तरे द्वावपरौ पुरुषौ तत्रोपस्थितौ । आसीदतिकृष्णाम्ब-रधारी तयोरन्यतरः । अदृश्यमभूदस्य वदनम् । परं नयनयोरग्रतः केवलं द्वे छिद्रे अभूताम् । पाणौ चामुना नग्नकृपाणो गृहीतः । अयमेव देव्या मम बलिदानं विधास्यतीत्यहमशङ्किषम् ।

---

१ चण्डालः । २ स्वर्गे । ३ कालेन । ४ अवदत् । ५ ' सोल्लुण्ठनं तु सोत्प्रासं सोपहासः– मनाश्रयः । ' इति हलायुधः । ६ पोतः पाकोऽर्भको डिम्भः । ७ पूजाम् । ८ मांसेन । ९ अग्निम् । १० शिरसः । ११ ईषदुष्णम् । १२ संतर्पयिष्यति ।

क्रूरसिंह । नाहमाकर्णयितुमभिलषामि तवोपदेशम् ? अपि जानासि कस्याग्रतस्त्वं स्थितोऽसीति ?

योगीन्द्र । आम् । सम्यग् जानाम्यहम् ! परमात्मना सृष्टस्य कस्यचन जन्तोरग्रत ! ! यदा निर्मितस्त्व प्रभुणा तदानीमासी पवित्रस्त्वम्, परमिदानीं न तस्य पवित्रस्य जन्तोरग्रे ? किन्तु कस्यचिन्नश्वरकीटकस्याग्रत स्थितोऽस्मि ! ! !

क्रूरसिंह । आ ? तापसापसद ? विमृश्य ब्रूहि । आ ? किमहं त्वा कुर्याम् ? दूषित. स्यामहं तव हत्यया, अन्यथा खण्डशस्त्वामहं व्यधास्यम्। न खलु विदित ते कीदृगहं भयङ्करो नर इति ।

योगीन्द्र । मा विद्धि मे–नराधम ? न किमपि कर्तुमीश्वरस्त्वम् ? अरेरेऽखर्वगर्वबर्बर ? अण्वपि दर्पं मा कार्षीः स्वशौर्यस्य । त्वमात्मानमतिबलशालिनं मन्यसे किमु ? त्वयाप्येकदा मरणीयमेव । अये ? येषा भ्रूकुटीमात्रेण पर्वता प्राकम्पन्त, येषाञ्च पदप्रहारेण धरणिरपि व्यदीर्यत तेऽपि प्रचण्डप्रतापवन्तो महान्तो महीपतय परश्शतदासजनवृत रमणीयरमणीरत्न मण्डितमन्त पुरमन्ततो विहाय कथामात्रता गतवन्त । अहह ? रावणसदृशो दर्पशालिनो नृपचक्रवर्तिनोऽपि क्षणेनैव दृष्टनष्टा अभूवन् । तत् कियती मात्रा त ? अतो मिथ्याभिमान मपहाय स्वमेन निरागस बालक विमुञ्च ।

क्रूरसिंह । तूष्णीको भव रे तापसाधम ? नाहं शुश्रूषे तव भाषणम् । इदानीमहमीशोऽस्मि स्वमनीषित पूरयितुम् । इतस्ततो भ्रमतस्त्वादृशस्य तापसस्य कथनेन स्वहस्तगतमाखेट विजह्यामहं किमु ? नेदं सम्भाव्यते ।

योगीन्द्र । किं कर्तुं समर्थोऽसि रे मूढ ? नैव सिध्येत् किमपि तवाभिलषितम् ? स एव विधाता विधाता खलु ? इच्छेच्चेदसौ क्षणेनैव त्वा विनाशयेत् । अरेरे विनश्वरैश्वर्यमोहमदिरामदमत्त मूढ ? विमृश किमपि । चिन्तय प्रभुम् ।

क्रूरसिंह । प्रभु ? अस्त्येव कुत प्रभु ? नाहं गणयामि तं किमपि । इदानीन्तने समये तु वसुन्धरायामिह क्रूरसिंह एवाय केवल बलशाली पुरुषोऽस्ति । नैव विद्यते कोऽपि मादृशोऽत्र महीमण्डले । सम्पत्स्यते सम्प्रति मदीयमेव समीहितम् ? अपसर तदितस्त्वमधुना । जीवन्तमहं त्वां मुञ्चामीति महती मे दया । गच्छ, मठोऽथ मम पन्थान ते दर्शयिष्यति ।

योगीन्द्र । नैव । नाहमिदानीं जिगमिषामि । नापेक्ष्यते तत्राय मठोऽपि । शृणु रे मूढ ? न भविष्यति निधारित ते किमपि ? प्रभोरेव स्यान्निर्धारितम् । तन्मादृशस्य संन्यासिन उपदेशमङ्गीकृत्य सन्मार्गमनुवर्तस्व येन ते श्रेयो भविता । दयनीयोऽयं बाल. । पश्य— *निरन्तराश्रुबिन्दुनी सजलेऽस्य नयने । विमृश–क्रूरसिंह ? विमृश ।* अरेरे वृथाभिमानमहणदुर्विदग्ध ? क्षत्रियकुलकलङ्क ? वज्रमयहृदय दुरात्मन् ? विमृश । अथवा, आम् ? विदितं मया ननु– ' विनाशकाले विपरीतबुद्धिस्तव जातेति ।'

क्रूरसिंह । प्रभु ? किं करिष्यति प्रभुः ? किं कर्तुं पारयिष्यति मे तव प्रभुः ?

[1]संयच्छाधुना प्रजल्पन्तीमात्मरसनाम्। नाहमाकर्णयितुमभिलषामि नैवैकमप्यक्षरम्। गच्छ गच्छसि चेद्, अन्यथा तवापि बालकस्येवास्य दुर्गतिर्भवित्री' इत्यवेदि। याहि याहि। अधुनापि त्वामितो गन्तुं कथयामि।

योगीन्द्रः। अभयं रक्ष्यैनं बालकं रक्षोपायैरपि ते नेतो गमिष्यामि। यत्राहं स्थितोऽस्मि ततः पदमेकमपि पश्चादपसरामि? कुरु, यत्कर्तुं शक्नोषि? किन्तु सत्यमवेहि—क्रूरसिंह! न किमपि कर्तुं शक्यते त्वया। अस्तु—भूमार्थम् अयमेव बालकस्त्वामन्ते पराजेष्यते, एष एव तव मनोरथं धूलिसात्करिष्यति, अस्यैव चरणयोरात्मनस्त्वकं त्वमन्ते नमयिष्यसि। अनेनैव तव विनाशोऽपि विधास्यते। पापिष्ठ? इदमपि ते भाति! कुरु यत्कर्तुमीशः। [2]तवाभ्यासमेव स्थितोऽस्मि।

'अ एवम्? एहि तावत्त्वमपि यमनगरातिथी भव।' इति प्रोच्य कृपाणमाकृष्य क्रूरो योगीन्द्रमभ्यद्रवत्। परं योगीन्द्रः प्रसन्नवदन एव शान्तं तस्थौ। तस्मादयं न बिभाय किमपि। यथैव क्रूरसिंहः कृपाणमुदतोलयत्तथैवायं योगीन्द्रः केवलं, स्वहस्तमुत्थाप्य— 'स्तम्भ, कृपाणेन?' इत्यवादीत्। तत्क्षणमेव क्रूरसिंहस्तत्रैव जडीभूय स्थितवान्। ततोऽसौ वराकोऽयं पदमेकमपि चलितुं न शशाक। इत्थं योगीन्द्रस्य योगबलमवलोक्य क्रूरसिंहो नितरां व्याकुलोऽभवत्। तदनु तदवस्थामालोक्य योगीन्द्रः—'किं विचिन्तयसि क्रूरसिंह? कथमेवं स्तब्धो जातः? परीक्षस्व निजबलम्।' इति जगाद। [3]प्रह्वीभूय क्रूरसिंहो योगीन्द्रम्—'क्षम्यताम्, महानुभाव! क्षम्यतामयमनुचरः। नाहं पूर्वं परिचयमलभं भवताम्। अनुगृह्यतामयं भगवता। शिरसा वहामि श्रीमदादेशमनतम्।' इति प्रोवाच। तस्य नम्रं वचनं निशम्य योगीन्द्रः—'क्रूरसिंह! बालकमेनं त्वं न किमपि पीडयितुं शक्नोषि, सत्यमेवम्'। इत्यब्रवीत्। करौ सम्पुटीकृत्य क्रूरसिंह ऊचे—'प्रभो! बालमेनं वर्जयित्वा यदन्यत् किञ्चिदादेक्ष्यति श्रीमान्। सन्नद्धोऽस्मि तदहं पालयितुम्। परमहं बालकन्तु नैव स्पृशामि।' इति।

इत्थं तस्य भाषणं निशम्याहमतीवाकुलीभूय योगीन्द्रमाश्लिष्य 'भगवन्! परित्रायतामयं भगवता। बालोऽस्मि श्रीमताम्। न गम्यतामेकाकिनं मामिह परिहाय भगवता। चाण्डालोऽयं मम पूर्वजन्मनो वैरी' इत्यकथयाम्। मम मूर्ध्नि पाणिपद्मं निधाय योगीन्द्रो मां व्याजहार—'राजकुमार! निश्चिन्तो भव। कदाचिदपि ते पीडा न भवित्री' इति। अथ योगीन्द्रः क्रूरसिंहमवादीत्—'क्रूरसिंह! रक्ष सावधानतयैव बालकम्! नाहमितोऽमुं निनीषामि। यथेच्छमेनं स्वकस्य कारागृहे निरुन्ध्याः। किन्तु बालस्यास्य बालोऽपि न पीडनीयस्त्वयेति स्मरणीयम्। यन्तु चेदेनं कदापि प्रपीडयिष्यसे तदा त्वमेव स्वयं विनंक्ष्यसे। पञ्चवर्षपर्यन्तमयं गुरुगृहे त्वयाऽऽगन्तुं न पारयिष्यते। त्वमिहागन्तुं कियदपि यतेथाः परमिदं स्थानं नैवोपलप्स्यते त्वया। यदैकदिवसाधिकपञ्चवर्षाणि भविष्यन्ति तदानीमेव स्मरिष्यसि गुरुगृहमिदमिति।'

---

१ निरुन्धि। २ निकटमेव। ३ नम्रीभूय।

'आम्। भगवन् ? शिरसा वहामि भगवदादेशमालाम्' इति प्रणम्य प्रोवाच शूरसिंहः। तदनु मामवदद् योगीन्द्रः- 'कुमार ? साधयाम्यहमिति।' 'भगवन् ? सह नयतु मां श्रीमान्' गमवति भगवति दुरात्मायं शूरो देव्यै मम बलिदानं विधाता।' इत्यभिधायाहं भृशमरुदम्। रुदन्तं मां निवार्य निजवक्षसा समालिङ्ग्य योगीन्द्रेणोक्तम्- 'मा भैषीः कुमार ? क्षत्रियपुत्रो भूत्वा किमेवमधीरो भवसि ? अधुना तु त्वया महापराक्रमशालि कृत्यं करणीयमस्ति। [1]कच-मेकमपि ते न पीडयितुमयं शक्ष्यति शूरः। निजयोगबलेनाहं त्वत्परित्राणं करिष्यामि। शृणु-चेदम्'-इत्युदीर्य मन्दं मदीयकर्णे-इतोऽग्रे त्वं पञ्चसंवत्सरावधि न द्रक्ष्यसि शूरसिंहमेनम्'। इति प्रोक्तवानयम्। ईदृशेन तदीयवचसा शान्तिरन्तर्ममावर्तत। पुनरपृच्छमहम्- 'किं तदात्र स्थले बन्दीभूय मया सकलं जीवनं यापनीयम्?' इति। योगीन्द्रस्तु विहस्य- 'न समर्थोऽस्मि तत्कथयितुम्, परं कियत्कालमत्रैव स्थेयं त्वया। यथाकालं सकलं मङ्गलं भविता? तव हस्तेनैव कियन्ति महान्ति कार्याणि करणीयानि सन्ति। भद्रं भूयात्तव।' इति मां निगद्य शूरसिंहं तदनुचरांश्च पृथग्विधायान्तर्दधे। कुत्र येन पथा वाऽयं गतवानिति नाज्ञायि केनाऽपि।

योगीन्द्र गमनानन्तरमवधार्य शूरः सावधानः सन् व्यचारयत्-'अपि सत्यं भवेद् योगीन्द्रेणोदीरितम् ? किमस्य वधे विधीयमाने न लभ्येत गुप्तगृहमिदम् ? ( क्षणं मनसि विमृश्य। ) नैव नैवम्।' किंतु खलु स्यादेतादृशस्य कथनेन ? अस्य बालकस्य बलिदानं तु करिष्याम्येवाहम्। क्षणमेकमपि तमहं जीवन्तं नाभिलषामि। पश्यामि- 'किं भावीति'। शूरसिंहश्चेदहम् ? अस्य तापसस्य वचनं वितथं विधास्यामि।' इति विचार्य बलिदातारं नरमुच्चैराह्वयत्। चिन्त्यद् चिन्त्यदसौ तदन्तिकमुपसृत्य कृताञ्जलिः सम्मुखमवतस्थे। तदभिमुखमालोक्य शूरेणाभिहितम्- 'बन्दीकुरु कुमारमेनम्। स्वयमेवाहमस्य बलिदानं करोमि।' तदाज्ञानन्तरमेव मदीयकरचरणं लोहशृङ्खलया [2]नियन्त्र्य देवीसम्मुखमहमुपस्थापितः। शूरसिंहो मम शिरश्छेदनाय कृपाणमाकृष्य यावन्मदुपरि संचालयति तावदेव महता निःस्वनेन समं शूरसिंहमुपरि निरवलम्बं प्रलम्बमानमद्राक्षम्। ततो मण्डलाकारेणोपरि वर्तुलं परिभ्रमन्नेव तारस्वरमाक्रन्दत्। परं को नु खलु समर्थस्तमधोऽवतारयितुम्? क्षणादेव [3]निलीनोऽयं क्वापि। न ममौ सम्प्रति हृदि मम हर्षः। इदानीमेवाहमजानां सत्यं योगीन्द्रकथनमिति। अहम्, स कृपाणधारी पुरुषः, अन्यश्चैकः सामान्यवेशो भटः' इत्येते त्रयो वयं तत्र स्थिताः। अनन्तरं कृपाणेन पुरुषोऽपरं पुरुषं किंचिन्मन्दमुदीर्य क्वापि प्राहिणोत्। प्रयाते तस्मिन्नथासौ [illegible]। ददृशे सम्प्रति तदीया रमणीया मूर्तिः। आसीदसौ पञ्चविंशतिवर्षदेशीयः। मदभिमुखीभूय मामकथयदयम्- 'कुमार ? रक्षितोऽसि त्वमधुना। भवादृशस्य शिरश्छेदस्तु धर। सुखमास्तामिह। भवानुमातानन्दिष्यति। त्वमिवाहमपि पूर्वं शूरसिंहेन बलिदानार्थमानीतः। परं समानीतकारुण्यपूर्णया गिरा बलिदातुं पुरुषस्या-

१ वधः चेत्। २ निबध्य। ३ अदृ.।

भावेन चायं मह्यं प्राणभिक्षां ददौ । सम्प्रति तन्निदेशानुवर्ती सबहुमानं निवसामि इति । अथायं मम करचरणे निःशृङ्खले विधाय मदर्थं भोजनमानेतुं ययौ । प्रतिदिनं [1]सकृदेवासौ मह्यं भोजनं प्रदाय प्रयाति स्म । तत्राहं कथं कथमपि दिनान्यगमयम् । एतस्मिन्नवधौ तत्रत्यमखिलं गुप्तस्थलमहमालोकयमहम् । परं नाऽलम्भि मया ततो बहिर्निर्गन्तुमवसरः । तत्र क्वचित्प्रकाशः क्वचिच्च घनोऽन्धकारोऽलक्ष्यत । "विना चन्द्रं कुत एष प्रकाशः ?" इति पृष्टश्चैव कृष्णवेशधारी पुरुषो मां व्यजिज्ञपत्– 'अस्ति इतोऽविदूरमेको महान् गिरीन्द्रः । तस्मिन्नलैरिव प्रवाहैर्भिः पदार्थैः परिपूर्णमेकमतिसुन्दरं सरोवरं विराजते । सकृदेव भित्तिषु तदीयजलसेकेन चिरकालं तस्य प्रकाशो भवतीति तज्जलमानीय कूरसिंहोऽत्र गुप्तगृहे क्वचित् क्वचित्स्थाने न्यषिञ्चत् । तस्यैवायं प्रकाशः कन्दरेषु ।' इत्येवं मया प्रकाशस्य रहस्यमज्ञायि । तात ? समाप्तप्रायमिदानीमिदं मदीयमितिवृत्तम् । महता कष्टेनाहं तत्र दिवसाननैषम् । यद्यपि तत्र मे किमपि दुःखं नाभवत् तथाप्येकान्तनिवासेनाहमतितरामुद्विग्नोऽभूवम् । 'अहह! आगतस्य मम वर्षत्रयमतिक्रान्तम् । ततो मम पिता भ्राता चातीव विह्वलौ भविष्यतः । कथमितो विमुक्तो भवेयम् ?' इत्येवमहर्निशं विचिन्तयतो मे कथं कथमपि पञ्चवर्षाण्यतीतानि । बन्दीभूतस्य मम परश्च एष पञ्चाब्दः सम्पूर्णः । ह्यो दिवसे कृष्णवेशभृता पुरुषेणाऽहं निवेदितः – 'जागृत नरसिंह, सत्वरं निशीथे तव देव्यै बलिदानं विधाता' इति । इत्थमाकर्ण्य नितरामहमाकुलोऽभवम् । अथ मुहूर्तान्तरमुपगम्य कश्चन पुरुषो मम हस्तपादं लोहनिगडेन निगडितवान् । गते तस्मिन्नहमात्मानमेकाकिनमवगम्य तद्हस्तान्मरणापेक्षया निजहस्तेनैव मरणीयमिति निश्चित्य तदुद्योगमारब्धम् । अत्रान्तरे तु–अयि तात ? त्वयैवागम्य परित्रातोऽस्म्यहम् ।"

इत्याकर्ण्य योऽसौ चन्द्रसिंहः क्षुब्धमनसा रणवीरोदितं वृत्तान्तं शुश्राव स इदानीं रणवीरमाचचक्षे– 'वत्स ? [2]अतिमात्रमतुलेऽद्यं नृशंसस्त्वाम् । भवतु । यथेश्वरेच्छा ! ! इति ।'

रणवीर । तात ? मा कार्षीः शुचं मुधा । भवति हि भवितव्यमेव । अपि कथयिष्यसि मां कथं तत्र भयानकस्थले त्वमुपगतवानिति ? अपि कुशलिनः पितृचरणाः ?

चन्द्रसिंहः । किमाख्यामि ते वत्स ? हतस्त्वममुना दुरात्मनेति यदाऽशृणोत् तातस्तदा त्वच्छिर [3]रोपहृतभुजा कूरसिंहमेन निग्रहीतुं परितोऽधारोहान् विमर्शवाम्बभूवाम् । परं नोपलेभे तस्याकृतिमपि । त्वदर्थमत्यर्थमसौ शोचितवान् । तमहं सम्यगाश्वास्याऽऽदाय च तदादेशं त्वदन्वेषणार्थं निरगच्छम् । विशालेषु नगरेषु, विकटेषु महारण्येषु, भयङ्करेषु गिरिकन्दरेषु चापि त्वामहं व्यचिनवम् । परं निराशोऽहमजनिषि त्वामनुपलभ्य । न्यूनादतिन्यूनं त्वां विचेतुमहं वर्षद्वयमनयम् । अनन्तरं चिन्तातुरो भूत्वाऽहं पुनरजितदुर्गराजधानीं न्यवर्तिषि । आसन्नवर्तिन्यां ▪ राजधान्यां कञ्चन ग्रामीणवस्त्रं पुरुषं स्वसकाशमायान्तमहमवालोकयम् । उपसृत्य मदभ्यर्णमयं मां प्रणनाम । तमहमप्राक्षम्– 'आः ? कस्त्वमिति ।' स तु

1 एकवारम् । 2 अपीडयत । 3 कोपाग्निना ।

प्रतिवचनमदत्त्वैव मत्पाणिमादाय मा दूरमनयत् । ' विक्षिप्तो वा मूको वाऽयं ' स्यादित्यहम वाधारयम् । यत्राऽयं मामनयत् तत्रैवाहमगच्छम् । स्तोकमन्तरं गतोऽयं मत्पाणिमुत्सृज्य समन्ततो निरैक्षिष्ट । यदा कोऽपि नादृश्यत तदाऽसौ समभाषत— ' महानुभाव ? क प्रस्थीयते भवता ' इति । ईदृशीं तदीयां वाणीमाकर्ण्य भृशमकुप्यमहं तस्मै । रुषा चाह तमगादिषम्— ' किन्तु ते प्रयोजनम् ? क्वाऽहं व्रजामीति ? किमर्थं मामत्र त्वमानय ? राजकुमारोऽस्म्यहम् । स्वनगरं प्रयामि ' इति । गिरमीदृशीमाकर्ण्याय विलक्षणो जनः कृताञ्जलिरवदत्— ' राजकुमार ? धैर्यमाकलय्य क्षणं निषीदतु भवानत्र । श्रूयतामस्याकिञ्चनस्य वचनम् । महद् भयमग्रे वर्तते । न गन्तव्यं भवता नगरे ' इति । अतोऽहं चाकितः सन् निरचैषम्— ' विक्षिप्तोऽयमिति । ' तमपृच्छमहम्— ' कस्त्वं रे ? किमर्थं मा नगरान्निवारयसि ? ' इति । ' कोऽहमस्मीति निरीक्ष्यतां श्रीमता । ' इति समारचय्यासौ शिरसो ग्रामीणभङ्ग्या वेष्टितं[१] मुञ्चोपमपनीयाऽत्मवेषेण तस्थौ । तत्क्षणमेवाहं समभिज्ञाय न्यगादिषम्— ' कोऽयम् ? विक्रमशाली विश्रम्भभाजनममात्यवर्यः प्रतापसिंह किमु ? कुतोऽत्रभवान् साम्प्रतमिहाऽस्मिन् वेषे ? कपि विद्यते नवाऽत्रभवान् पितृवरोऽधुना नगरे ? किमुपलब्धो नवेति वत्सो रणवीरः ? अकृतार्थोऽस्म्यहं तदन्वेषणे । किं प्रयोजनं गुप्तवेशमीदृशमाकलयितुं भवताम् ? ' इति । ईदृशो मम प्रश्नानिशम्य स्वललाटे करं निधायायाचष्टामात्यवर्यः - ' हन्त ? अमन्दद्रु त्सप्रदमिदमस्मद्धृल्लमुदन्तजातमावेदयितुमहमेव केवलमवशिष्टोऽस्मीति । ' ' किमस्ति ? कथनीयमञ्जसा—मा विधा मामधिकं सन्देहवन्दीमन्दिरे । किन्तु किञ्चनाम ङ्गलमयं वृत्तं सद्वृत्तम् ? ' इति परशङ्कुलहृदयोऽहमन्वयुञ्जि तम् । सोऽब्रवीत्—राजकुमार ? भयङ्करी घटना घटिता ! ' ' भयङ्करी घटना किमु ? ' इति पृष्टमाकुलेन मया । अथोक्तवान् श्रीप्रतापसिंहः- ' आम् । भयङ्करी घटना । श्रूयताम्—केनाऽपि दुरात्मना हृते रणवीरे त्वयि च तं गवेषयितुं निर्गते कृष्णपक्षनिशायामेकदा महाराजो योगाभ्यासार्थं पुष्पभद्रातीरं प्रस्थितः । तत्रैकाकी गन्ता महाराजो मया न्यषेधि । परं हन्त ? न कृतं मनसि मे वचनं महाराजेन । एकाकिनैव प्रास्थायि भूपतिना । ततो निवर्तमानो महाराजः क्रूरेण क्रूरसिंहेन कपटप्रपञ्चै[२]र्विप्रलभ्य वन्दीकृत इति । ' ' प्रियबन्धो ? अप्रष्टुलैवैनमुदन्तमहमतीवक्रुद्धोऽभवम् । परममात्यवर्येणाहं सान्त्वयित्वाऽभिहितः — ' राजकुमार ? महाराजं वन्दीकृत्यायं दुष्टहतकः क नष्ट इति न व्यज्ञायि मया । बन्दीकृतं नरेन्द्रं निशम्याहमल्पं सैन्यमादाय तन्मार्गणाय निरगाम् । उपलभ्यावसरमस्मयमाम्यानुचरैः समभिद्राभिगम्यास्मदीयमव शिष्टं सैनिककुलमलं निहत्यानायासेनास्मद्दुर्गं प्रविश्य निर्भयः सैस्तत्रैव न्यवसत् । अथाऽन्तरे निजवर्ग[३]मुपचित्य स्वैरं प्रकृतिमण्डलमेष पीडयामास । अल्पेनैवानेहसा महाराजमनुपलभ्य निराशहृदयेन पुनर्व्यर्थम् । [४]अनतिदुर्गोपशल्ये शिविरं सन्निवेश्याहं न्यवात्सम् ।

१ ' उष्णीषः शिरोवेष्टकिरीटयोः । ' इत्यमरः । २ वञ्चयित्वा । ३ संवर्ध्य । ४ उपशल्ये ग्रामान्ते ।

तद् दुर्गमरातिहस्तगतं विधायाधिवसतीति विज्ञाय दुर्गमाक्रमितुमहं व्यचिन्तयम् । परं निष्फलो मम मनोरथः । यत आसीदधिकमरिबलम् । न कदर्थनीया वृथा [1]वरूथिनीति विचिन्त्य [2]योधनमहं नाकार्षम् । [3]स्वकटकादेकं गुप्तचरं सपत्नोदन्तमवगन्तुकामोऽहं प्राहिणवम् । आनीतश्चायं सन्देशस्तेन— 'विना प्रयासमनिरुद्दुर्गमरातिनाऽऽचिच्छिदे, महाराजश्च व्यापादित' इति । 'हा हन्त ! किं सदा सुरलोकं सनाथितवन्तः पितृचरणाः ? अहह ! पितृदर्शनमपि नैवाप्तानि मे ? हन्त ! किमिदानीं करोमि ?' इत्यालप्याश्रुमुदसृजत् रणवीरः । तदश्रुबिन्दुवृन्दमात्मपटखण्डेन परामृश्य चन्द्रसिंहस्तमसान्त्वयत्— 'वत्स ! किमेवं विह्वलीभवसि ? अमन्दौदार्यया कर्मणा गमिष्यामि । यावज्जीवं वयं पितृघातकस्यास्य वैरं निर्यातयिष्याम' इति ।

रणवीरः । बाढम् । क्रूरहतकायास्मै तस्य क्रूरकर्मणः फलं तु प्रदेयमेव । किन्तु तात ! तदनु किं व्यधायि भवता ?।

चन्द्रसिंहः । पितृवधवृत्तान्तमाकर्ण्यात्यन्तमेव कुपितः सन्नहं तदानीमेव स्वावशिष्टा[4]मनीकिनीं मत्पितुरमात्यवर्यमादिशम् । स तु प्रविवेकशाली बुद्धिमार्गेऽतिनिपुणोऽमात्यवर्यस्तु— 'राजकुमार ! न शक्यते योद्धुमिदानीमस्माभिः । किञ्च अल्पपूर्वमेवास्मदीयराज्यममुना नृशंसेनास्मच्छत्रुणा [5]इङ्गितेऽमरकण्टकाधीश्वराय रणजितसिंहक्षितिपालाय तस्माद् विपुलं द्रव्यमादाय समर्पितम् । तद्द्रव्यविगमेन कुहचिदरण्यभूमौ निदधे । साम्प्रतमसौ दुरात्मा क्रूरसिंहो विजयनगराधिराजश्रीविजयसिंहनरेन्द्रस्य राज्ये सेनापतिपदं कलङ्कयति । तावत्तु सुराल्पमलञ्चक्रुमहानेव ? किन्तु वयं [6]तदीयवैरनिर्यातनं विधास्यामहे । प्रियनरेन्द्रनन्दन ! धैर्यमाधत्स्व । किन्तु बोधयितव्यं नाम बुद्धिमति त्वयि ?' इति बोधयित्वा मामशाम्यत् ; पश्चादपृच्छमहम्— 'अमात्यवर्य ! तत्किमिदानीं करणीयम् ? कथञ्च प्रतिकार्यं पितृवैरम् ?' इति ।

प्रतापसिंहः । अनुमन्यसे चेन्मदनुमतिम् ? इदं मे सम्यक् प्रतिभाति । अवधीयताम्— 'सकलमिदमात्मबलमादाय यतोऽयं नृशंसो निवसति तत्रैव विजयनगरराजधान्यां गुप्तवेषेणोषितव्यं मया । येनाप्युपायेन महाराजश्रीविजयसिंहः साक्षात्कृत्य सेवयाऽऽराधनीयः । प्राप्यावसरं मैत्रायां तु दुरात्मनः प्रकाशनीयमस्य [7]गर्ह्यं कर्म । राजकुमार ! मह्यमभिदधदिदं किल— 'न हर्षणीयमभ्युदये जनेन, नापि विषादनीयमापदि, सदा प्रसन्नेनैव मनसा स्थेयम्' इति । सर्वं प्रस्तावं पश्चात् । प्राकाशि मया निजसम्मतिरिदानीं निवेद्य किमभिमतं ते ? अहमकथयम्— 'सम्यग् विचिन्तितं भवता । कियत्कालमहं रणवीरमिमं स्वत्र परिभ्रम्य मार्गयिष्यामि । प्रायोऽयमसौ वाप्यसौ मया मत्सदृशेनैव महाराजश्रीविजयसिंहस्य सकाशमवाप्स्यते । मन्ये, यतः शूरसिंहस्त्रैव रणवीरोऽपि भवेदिति सोऽपि विजयनगर एव प्राप्येत, तद् भवानपि निपुणं गवेषयतु तत्र रणवीरम् । गच्छामि सम्प्रति । अचिरेणैव कालेन पुनरहं भवन्तं सेवा

---

१ सेना। २ युद्धम्। ३ शिविरात्। ४ सेनाम्। ५ ऐतिह्यी ग्रहः। ६ वैरशुद्धिम्। ७ घृणितम्। ८ निन्द्यम्।

❀

तिथीकरिष्यामि !' इति निर्दिश्य प्रधानमापृच्छ्य विसृज्यामुमहं त्वां गवेषयितुं निरक्रमिषम्। आहिण्डमानोऽहं विनयनगरान्तिकवर्तिनि घोरकान्तारे विस्मृतवर्त्माऽभूवम्। उपस्थिता रजनी तदानीमग्रे। आसमपरिचितपथश्चाहम्। तस्मान्मार्गं मार्गयितुमना अटवीमभितोऽहं पर्यटम्। अत्रान्तरे श्रवणसरणिं मम भीषणमेकं चीत्कृतमुपागतम्। तदुद्दिश्याभिगम्याज्ञासिषम्—'स एव क्रूरसिंहोऽनुचरयुगलानुगतो राजकुमारीं कुमुदिनीमाहृतवानिति।' परिरक्षिता मया क्रूरहस्तात्सा राजकुमारी।

अथ एव रणवीरो जगाद— 'किम्? परित्राता किमु भवता राजकुमारी? अहो? आश्चर्यम्!! तात? तत्राप्ययं चण्डालः कृतघ्नतां दर्शितवान् किमु? धिग्धिगेनं क्षत्रियहतकम्!!' इति।

चन्द्रसिंहः। आम्? पूर्णोऽधुनाऽमुष्य [1]कालुष्यकलशः। तदानीमेवाहं किल्बिषकारिणमेनमहनिष्यम्, परं दिष्ट्याऽद्य मम पाणिपञ्जरात्प्रसृतः। अथ राजकुमारी महाऽऽसीद्याहं विजयनगरमुपागमम्। सुतरां सत्कृत्य मां प्रशशंस महाराजश्रीविजयसिंहः। न्यवेदीव्यासौ मां स्थातुमत्र, परमहं तं सप्रश्रयं न्यषेधिषम्। यदैव कुमुदिनी मां भृशं [2]निर्बबन्ध तदाऽभ्युपेत्य वचनमस्या अतिष्ठमहमत्र। महाराजेनाहं प्रधानसेनानायकपदवीमधिरोपितोऽस्मि। नावेदयमहमिदानीमपि तं निजनाम जननी। सर्वे मां योगिराजपदेन सम्भावयन्ति।

रणवीरः। तात? किं वृत्तं तदनु क्रूरसिंहस्य?

चन्द्रसिंहः। तन्निग्रहणाय सर्वत्र सादिनः प्रेषिता महाराजेन। परं क्व पलायितोऽयमात्महतक इति न विदितं केनाऽपि। तं निग्रहीतुं गताः सादिनः पुनः परावृत्ता निराशहृदयाः। सुखादहमत्र न्यवसम्। अस्मत्प्रधानेन श्रीप्रतापसिंहेनाऽपि परमचातुर्येण विजयनगरराजस्य प्रधानपदमुपलब्धम्। एषोऽत्र वीरसिंहनाम्ना विख्यातोऽस्ति। परश्व एवाहमत्र नगरे समावासिषम्। अद्याहं सेनापतिरहं त्रिमासावधिं पर्यटितुं निर्गत्य विधिं तथैव प्रभुलीलामवलोकमानः कानने तस्मिन् गुप्तगृहस्य द्वारशिलामासादयम्। अथाहं तां शिलामध्यतिष्ठम्। समयेऽस्मिन्निमग्नमासीन्मम मनो गम्भीरविचाराम्भोनिधौ। विचारयन्नेवाहं कस्मादप्यनिभृतं चरणेन प्राहरम्। पदाघातेन मदुपवेशनशिला सहसा निरालम्बीभूय मनाग्दूरं स्खलिता। तदुपरतादेवमारोहणमालोक्य सोपानैरवरुह्य गुप्तगृहं प्राविशम्। सकलं गुप्तस्थलमालोकि मया तदीयम्। देवीमन्दिरमपि दृष्टम्। अनन्तरं त्वदधिष्ठितप्राङ्गणस्य वर्तिन्यां कन्दरायां निलीय-'एष किंमुमना' इति वीक्षितुकामोऽहं स्थितवान्। मुमूर्षुं त्वामवधार्य त्वदग्रणमागत्य त्वामहं मरणान्न्यवारयम्। रणवीर? अवसानं गतेयं कथा अधुना। परमेश्वरानुकम्पयाऽद्य फलितं मम प्रयत्नैः। प्रफुल्लमिदानीं हर्षेण मम हृदयम्!

सम्प्रति प्रावर्तत प्रेमबाष्पप्रवाहो रणवीरस्य नयनाभ्याम्। अतीवोत्कण्ठया बन्धुमाश्लिष्य-'किं करणीयमग्रे?' इत्यप्राक्षीदयम्।

---

1 पापघटः। २ निर्बन्धः—आग्रहः कृतवती।

चन्द्रसिंह ! वत्स ! गुप्तवेषेण मदन्तिकं समागच्छ त्वया । केनचिद् युक्त्याऽऽत्मानं योगिराजान्तेवासिनं रणधीरनामानं ख्यापयाहि । अवगतं ननु वत्स ! राजसम्बन्धिनि कर्मणि कौशलाचरणमावश्यकम् । अर्थार्थितर्णादपि निस्तन्द्रेण निपुणं व्यवहरणीयम् । इत्या वदुदीर्य मौनमाकलयाञ्चकार चन्द्र ।

आकर्णयतोरेवानयो रजन्यास्तृतीयः प्रहरोऽतिक्रान्तः । परिवर्तिता प्रहरिणः । उपवनतरुनीडावलम्बिना विहङ्गमानां कदम्बकानि मधुरकलरवैः 'सनातेयं विभातप्राया विभावरी' ति सकलजनेभ्यः सूचयामासुः । चिरकालानन्तरमवलोक्य परस्परमालिङ्ग्य सुखं दुःखमयीं घटनामालप्योभावपि भ्रातरौ सुखं सुषुपतुः ॥

॥ ७ ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ दयानन्दलहरीसतीर्थ्ये कुमुदिनीचन्द्रे तृतीया कला ॥ ३ ॥

---

## अथ चतुर्थी कला ।

" स्मरराजराजधानी प्राङ्गणलक्ष्मी विलासविहगानाम् ।
शृङ्गारकाननाली हरति न बाला मनः कस्य ॥ "
" दृष्ट्वा विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि ।
इत्यपवादभयादिव हरिणाक्षी [3]वेधसा विहिता ॥ " ( नलचम्पू )
' दैवाधीनेषु महतां गुणदोषसङ्गा । " ( स्फुटम् )
" कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ " ( मेघदूते )

☞ योगिराजोऽप्यात्मरहस्यं प्रकाशयिष्यतीति न भातीदानीं चन्द्रो राजनन्दिन्याः कुमुदिन्याः महाराजाधिराजविनयसिंहस्य चान्तःपुरम् । कदा चाऽयं कालः समुपस्थास्यते, कदा चैव योगिराजो निजोदन्तं निवेदयिष्यतीत्युभयोरेव हृदये भवति महतीवोत्कण्ठा । याव-*त्महाराजा ?मनःकुर्वन्ममत्वतो स्वं विलासोद्यानं निजोपवनशालायामनन्दि* 'कीदृशोपमिदं हर्षामृततरङ्गिणी हृदयं तरङ्गयतीति ।'

भामार्थमेव मेघदूतं निर्मितमिदं विलासोद्यानं नरेन्द्रेण । [4]अभिलष्यानुरूपमेव विलासि-जनहृदयानन्ददमिदमुद्यानम् । बकुलतिलकरसालचम्पकाशोकपनसजम्बुजम्बीरनिम्बकदम्ब

---

१ पृ० १ ' प्रभ ऽनुभाव पुरश्च ' इत्यमरः । २ अक्रमेण । ३ ब्रह्मणा । ४ नामधेयम्
' अभिलाषो न मनोभवः ' इत्यमरः ।

कदलीप्रमुखविविधतरुवरा विराजन्तेऽस्मिन्नुद्याने । अनेकदेशोपनीतविविधवर्णसुन्दर[1]विहङ्गवृन्दमण्डितानीहानेकानि विलसन्ति [2]जालमन्दिराणि । प्रफुल्लमहत्सहस्रदलकमलानुकारिरुचिरमणिमयमुखरमणीय[3]जलोद्गारियन्त्रनालिकालङ्कृतान्तरालाः पदे पदे सहस्रशः प्रोल्लसन्ति [4]स्फटिकाश्मनिर्मिता मनोहरा [5]दीर्घिकावर्तंसिकाः । यासां निर्मलसलिलाभ्यन्तरेषु नीलारुणहरितादिरागरञ्जितवपुषः क्रीडन्ति कोटिशो मत्स्याः । मध्यभागे चास्योद्यानस्य [6]सुन्दरोपलविरचितोऽन्तःप्रदर्शितदर्शनीय[7]कन्दरो जलोत्क्षेपिप्रभयन्त्रमुखनिःसरदमलतरसलिल[8]निर्झररुचिर[9]शिखरो राजते कृत्रिमगिरीन्द्रः । क्रीडाशैलस्यामुष्य जलधारा तदन्तिकवर्तिन्यां कस्याञ्चन [10]नागवल्लीदलानुकारिण्यां [11]पुष्करिण्यां प्रवहन्ती मुदं जनयति राम् । यस्यां हंसमयूराकाराः [12]सुपरिष्कृता विभान्ति [13]कतिपयास्तरणयः । अमुष्मिन्नुद्याने विविधस्थलेषु ललितवालुकालतामण्डपकुलानि कामपि कान्तिं [14]कलयन्ति । आयुष्णकालेऽपि कोऽपि तदभ्यन्तरं प्रविशेद् यदि सद्य एवासौ तदीयातिशीतलतया निद्रापारतन्त्र्यमेवाकलयेत् । समन्तादुद्याने संचरणाय विरचिता स्फटिकमणि[15]कुट्टिममयी रुचिरा मार्गावली । उभयतो मार्गं प्रतिकिञ्चिदन्तरालमायोजिता धवलोपलनिर्मिता[16]आसन्दिकाः । यदुपान्तिकवर्तिकल्पद्रुमादिवल्लीवेल्लितवृक्षवलयनीडावलम्बिकोकिलकीरसारिकाकपोतादिविहङ्गचयाः निजमञ्जुलकलरवैः समीपस्थासन्दीस्थितानां नृणां हरन्ति हृदयानि । [17]वितत्य निजकलापमण्डलं [19]शिखण्डिमण्डलमारचितताण्डवैः[21]हिण्डमानानामुद्यानखण्डे [22]नरप्रकाण्डानां [23]मुष्णाति चक्षूंषि सुतराम् । क्रीडाशैलस्यानतिदूरमेव सुन्दरेन्द्रनीलपद्मरागमरकतमणिमयभित्तिको महार्घश्वेतपाषाणनिबद्धो भव्यप्रासादश्चैकोऽस्ति । कस्मिंश्चिदवसरे नरेन्द्रचूडामणिरिमं प्रासादं निजचरणारविन्दैरलङ्करोति । अत्र महाराजश्रीविजयसिंहो विलासोद्यानमिदमुपस्थातुमना अस्तीति प्रहरिणः प्रातिकियदन्तराल स्वकार्यं निर्वहन्ति स्म । प्राप्ते मध्याह्नकाले रमणीयेऽस्मिन्नुद्याने कलहंसगामिन्यस्तिस्रोऽभिनवयौवनालङ्कृतयः समुपस्थिताः । आसां द्वे पुरस्सरे अभूताम्, तयोः पृष्ठे कियदन्तरेणापरागच्छति स्म । ये इमे पुरोगामिन्यौ तयोरन्यतराऽऽसीद् राजनन्दिनी कुमुदिनी । अपरा चेयं सेनापतिदुहिता प्रियम्वदा नाम तत्सखी । यापीयं तयोरनुगामिनी सा तु नरेन्द्रबालाया मुख्या दासी ।

आसीत्पद्मदलावर्णमिव स्पृहाम्बी भूपनन्दिनी । सेयम्—[24]वदनेन शारदचन्द्रमण्डलम्,

---

१ पक्षिसमूहः । २ पञ्जिनिव साधं रचितानि सूक्ष्मलोहजालिकागृहाणि । ३ नानाविधजलोत्सातिधारायन्त्रम् । 'फुवारा' इति भाषा । ४ धवलपाषाणकृताः । ५ वापीश्रेण्यः । ६ उपलः पाषाण. । ७ 'दरी तु कन्दरो वा स्त्री' । इत्यमरः । ८ 'प्रवाहो निर्झरो झरः' । ९ शृङ्गम् । १० ताम्बूलवल्ली । ११ पुष्करिणी—खातमल्पं सरः । १२ सुशोभिता । १३ नौका. । १४ धारयन्ति । १५ 'कुट्टिमोऽस्त्री निबद्धा भूः' । १६ आसनविशेषाः । १७ प्रसार्य । १८ बर्हभूषणम् । १९ मयूरवृन्दम् । २० नृत्यैः । २१ परिक्रमताम् । २२ जनश्रेष्ठानाम् । २३ हरति । २४ मुखेन ।

नेत्राभ्यां मृगलोचने, दन्तकान्तिभिः [1]कुन्द[2]कुड्मलद्युतिम्, [3]कुन्तलैः [4]रोलम्बकदम्बकम्, हास्येन चन्द्रिकाम्; भ्रूयुगलेन [5]मदनचापद्वयम्, [6]दन्तच्छदेन बिम्बफलम्, [7]कुचद्वन्द्वेन चक्रवाकमिथुनम्, स्वरेण [8]कलकण्ठकलरवम्, [9]श्रोणिभारेण [10]वनराजकटितटम्, ऊरुमण्डलेन [11]रम्भास्तम्भम्, [12]काञ्चनञ्च [13]कायकान्त्या तिरस्करोति-इति सर्वाकारहृदयङ्गमेयं धन्या कापि देवकन्या।

कलधौतकौशेयाम्बरं परिहितमिवासीन्मनया। अस्या हि महार्हललितमुक्तावलीमण्डितः कण्ठः। रमणीयरत्नवलयविभूषितौ सुकुमारौ करौ। कमनीयकर्णिका[14]युगलचोचुम्ब्यमानं कपोलफलकयुगलम्। [15]महार्हहीरकखचितचित्रकनककुसुमिकालङ्कृता नासिका। मञ्जु[16]मञ्जीरशिञ्जनमञ्जुलं चरणयुगलम्। शिरीषकुसुमसुकुमारञ्च वपुः। एतस्या मुखमण्डलं निष्कलङ्कभावनाप्रतिबिम्बितामिव बिभराम्बभूव। कमनीयामियं[18]माल्यामिवासीदस्या मदनकिरणता—पेलवशिरसा[19]कामिमानं बभार। ततोऽपीयं [20]रुचिरपत्रभङ्गमकरिकाचर्चितकपोलेति लावण्य[21]रसनिर्झरिणीमिमां सुन्दरीमवलोक्य को नु सुखेन भवेत्? नूनमियं सुन्दरबाला शान्तात्मना वेधसैकान्तस्थले निर्मापितेति मत एव कोऽपि व्याहरेत्सुमनसां प्रवर। यादृशी बहिरियं सर्वाकारमनोज्ञा दृश्यते ततोऽप्यधिकमियमतिमनोहराऽभ्यन्तरे।

आसीदियं सुशिक्षिता नरेन्द्रनन्दिनी गुर्जरदेशभाषायाम्। देववाण्यामपि परं निष्णाता। शिक्षणप्रभावेणेयं सद्गुणवती बभूव। संगीतविद्यायान्तु [22]लब्धवर्णेयम्। निजराजमहालय[23]चन्द्रशालामुपविश्य यदेयं वीणारवेण [24]समधुरकाकलीं मेलयन्ती मञ्जुलं गायति स्म तदा तस्या गानमाधुर्येण समीपवर्तिनो जनाः पशुपक्षिवर्गोऽपि सर्वो मूर्च्छित इवाभवत। आसीदियमेकैव केवलं महाराजस्य दुहिता। अतो महाराज एनां पुत्रादप्यधिकं स्नेहेन ऐक्षत। कुमुदिन्यपि विधोरादेशमाज्ञां वहति स्म शिरसा। कुमारीदशायामेवाभवदियमपि राजकुमारी। आश्रितदुर्गाधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजश्रीचन्द्रसिंहराजकुमारादन्ते कोऽप्यस्या अनुरूपोऽन्यो वर एव नासीत्। परं हन्त? राजकुमारोऽयं नाद्यापि साम्प्रतमागमत्। [illegible]ऽऽन्ते सोऽयमिति जानन्त्येव प्रियस्यावधिसंख्याः।

राजकुमार्याः प्रियसहचरीयं प्रियम्वदाऽपि [25]तद्गुणमेव परमसुन्दरी सुगुणशालिनी चासीत्। समवयस्के इमे वयसो विलासोद्याने पर्यटन्त्यौ [27]धारायन्त्रान्तिकवर्तिन्यामेकस्यां

1 कुन्दं माघ्यं कुसुमम्। २ 'कुड्मलो मुकुलोऽस्त्रियाम्'। ३ केशैः। ४ रोलम्बः-भ्रमरः। 'इन्दिन्दिरोऽली रोलम्बो द्विरेफः' इति हैमः। ५ कामधनुः। ६ ओष्ठेन। ७ स्तनयुगेन। ८ कलकण्ठः कोकिलः। ९ श्रोणिः कटिः। १० वनराजः सिंहः। ११ कदलीस्तम्भम्। १२ सुवर्णम्। १३ कायः शरीरम्। १४ वलयः कटकः। १५ कर्णिका कर्णभूषणम्। १६ हीरकखचिता नासाभूषा। १७ मञ्जीरः नूपुरः। १८ सुमनम्। १९ आशितम्भावम्। २० कपोले कस्तूरीरचितः पत्ररचनाविशेषः। २१ नदीम्। २२ निपुणा। २३ शिरोगृहम्। २४ चन्द्रशाला शिरोगृहम्। २५ काकली-सूक्ष्मरवः। २६ अनुरूपम्-सदृशम्। २७ धारायन्त्रम्-फुव्वारा इति हिन्दी।

सुन्दरासन्दिकामुपविश्य सानन्दमालपताम् । अत्युष्णतया ग्रीष्मकालस्य तयोरनुगामिनी दासी मयूरपिच्छैर्वीजयामास सहचरीयुगलम् । आलपन्त्योरेव तयोः कुमुदिनी प्रियम्वदामाह– ' सखि ! योगिराजोऽद्य निजवृत्तान्तमावेदयिष्यति । तदतिहर्षो भविताऽस्माकं तदाकर्णने । कियानयं परोपकारी ननु ? निजप्रियेण चन्द्रेण त्वां संयोजयिष्यामीति प्रतिज्ञातममुना । सखि ! नूनमयं कोऽपि महानुभाव इति प्रत्येमि । '

' प्रियम्वदा । आम्, सखि ! ममाप्येवमेव प्रतिभाति । तद् वपुषः सौन्दर्यम्, तद् विशालं ललाटम्, मनसस्तद् गाम्भीर्यम्, तन्माधुर्यं वचसः, सा च कापि 'भाषणभङ्गी– इति' सर्वमपूर्वमिवामुष्य महानुभावस्य । सखि ! किमर्थमीदृक् सुन्दरः पुरुषो योगिपदमलञ्चकार ? ।

कुमुदिनी । प्रियम्वदे ! विचिन्तयन्त्यापि तन्नावगम्यते खलु मया ! उपस्थितेदानीं तदागमनवेला । आगते तस्मिन् वार्तान्तर एव त्वं तमनुयुञ्जीथाः । किमयं तदानीमुत्तरं वितरिष्यतीति समाकर्णयिष्यामो वयम् । तातचरणानामपि समुपस्थितोऽयमागमनसमयः ।

इत्थमालपन्त्योरेवैतयोर्नयनसरणिमुपेयिवानभिमुखमागच्छंश्चन्द्रसिंहः । तमवलोक्य जगाद कुमुदिन्या– ' पश्य पश्य–प्रियम्वदे ! योगिराज एव समायाति पुरतः । कस्मिन्नपि विचारे निमग्नोऽयमिति प्रतीयते । एहि, सखि ! वयमस्य अलोद्गारियन्त्रस्य पश्चाद्विलीय– ' किमयमालपति ? ' इति शृणुम इति विचार्योऽपि युवत्यो धारायन्त्रान्तर्हिता भूत्वा स्थिताः ।

विचरन्नयं चन्द्रसिंहस्तदेव स्थानमुपगम्य तामेवासन्दिकामधिष्ठाय समन्ततश्चक्षुषी निक्षिप्य मनसैवमालपत्–' अहह ! प्रभो ! अगम्योऽयं तव महिमा । अल्पीयस्येव समये कियन्तो घटना घटिताः ! कुतो ममेहागमनं नगरे ! कुतश्चेदं मे भ्रातृदर्शनम् ! धन्यं ते विभुत्वम् ! विभो ! कुमुदिनि ! निचित्रोऽयं तवापि प्रेमा । प्रियतमे ! नूनं रत्नमसि त्वमपि संसारेऽस्मिन् ? सुन्दरि ! भाग्यशाली भवेयमहं त्वामासाद्य ! परमियन्दवधि किमिति कोऽपि नायातः ! अद्य मयाऽऽत्मीयं पूर्ववृत्तं निवेदनीयम् । अये ! कियन्तमतुलमानन्द[2]माकलयिष्यति कुमुदिनीयं मामभिज्ञाय ? महाराजश्रीविजयसिंहस्यापि हृदयाम्बुनिधिरानन्दोर्मिभिराप्लुतो भविता ? ' इति विचिन्त्य ततः समुत्थायेतस्ततः संचरितुमारेभे । योगिराजस्यालापं श्रोतुमनोभिर्धारायन्त्रान्तर्निलीनाभिस्तरुणीभिस्ताभिर्यदा चन्द्रभाषणरहस्यं नावागम्यत तदा ततो बहिर्निर्गम्य चन्द्रसिंहचरणारविन्दयुग्मप्रस्थानमागम्यत । कुमुदिन्या चन्द्रं प्रणम्य– ' योगिराज ! प्रियसखीयं मे प्रियम्वदा भवन्तमभिवादयते ' इत्यभ्यधायि । '

चन्द्रसिंहः । ( विहस्य । ) भद्रे ! भद्रं भूयाद् भवत्योः । कदाऽत्र समागतवत्यौ भवत्यौ ! कथमद्यापि नोपस्थितास्तातचरणाः ? ।

---

१ भाग्यशैली । २ धारयिष्यति ।

कुमुदिनी । भाग्यवतोरावयोरल्पीयानेव कालो जातः । अधुनैवोपस्थास्यते पितृचरणैः । अथ स्वीयं पूर्ववृत्तं श्रावयितुं प्रतिश्रुतं श्रीमताऽस्मभ्यमिति स्मर्यते न वेति भवता ? योगिराज ! अत्र भवानतीव चतुर इति मे भाति ।

प्रियम्वदा । ( मध्य एव । ) सखि ! न शक्नोसि खलु त्वमग्रभवन्तमभिज्ञातुम् ? द्रक्ष्यते यदि नामामुना मादृशी; विज्ञास्यते तदानीमेवात्रभवता ! परं को नु खलु जानीयाद् यदेवमत्रभवान् योगिवेषेण परिभ्रमतीति ? क्षम्यतामयमविनयो योगिराजेन । पाणिग्रहणमङ्गलं विधास्यते न वेति जिज्ञासयाऽनुयुज्यतेऽत्रभवाननया ? ।

चन्द्रसिंहः । ( विहस्य । ) प्रियम्वदे ! न जानीषे खलु त्वम्-किमिदं पाणिग्रहण-मिति । नेदं क्रीडनकं बालस्य । इदानीन्तने समये जगति यादृशं पाणिग्रहणं भवति तस्यान्ततः कीदृशी परिणतिर्जायते- इति न विज्ञायते खलु त्वया ? हन्त ? यत्रैव विलोकयामि तत्र एवाक्रन्दध्वनिर्निशम्यते । अहो ! भारते यदा विवाहकौतुकं सम्पद्यते तदा [1]समुल्लसति सर्वेषां हृदि [2]मुदम्बुनिधिरतिवेलम् । परं पश्चादिदं पाणिग्रहणमङ्गलं विघ्नरूपेण परिणमति । [3]दम्पत्योर्मिथो[4] हृदये [5]सौहार्दमनावाप्नुवतां गृहेषु कलहाङ्कुराः प्रादुर्भवन्ति । समुत्पद्यते चान्तेऽतीवदुष्परिणामः । नाहं कर्तुमना इदं पाणिपीडनमङ्गलम् । नैष्ठिकब्रह्मचारिणा भूत्वा सच्चिदानन्दकन्दजगदीश्वरोपासना विधेयेति मम सिद्धान्तः ।

प्रियम्वदा । यथार्थमभिधीयते योगिराजेन । कोऽपि विलक्षणः पुरुषोत्तमो भवान् । अननुरूपमिव ममाधिकमाचरणं विदिताखिलधर्म[6]मर्मणि समधिगतपरमात्मध्यान[7]शर्मणि भगवति । परमिदन्तु विज्ञप्येव भवन्तो गृहिणीं विना स्वयं गृहमिति । भवादृशा महापुरुषा यदि गृहं त्यजेयुस्तदाऽस्मादृशीनामधमाधमबालानां का दशा भविष्यति ? योगिराज ! न गोपनीयं किमपि हृदि । यदेव स्यात् हृद्यं निवेदनीयं तदपि श्रीमता ।

चन्द्रसिंहः । प्रियम्वदे ! संसारसमुद्रेऽस्मिन् पुरुषपोतस्य कलत्र[8]मरित्रमिव वर्तते । दुस्तरपारिममिव नास्य कलत्रमत्यावश्यकम् । स्त्रीजातिरधमेति यद् गण्यते न तथा । गृहराज्ये गृहिणी परममन्त्रिणीव । अमूल्यरत्नानां [10]खनिरियं नारी । [11]यत्कुक्षितो मर्यादापुरुषोत्तमश्रीरामकृष्णयुधिष्ठिरप्रतापशिवराजप्रमुखा वैदिकधर्मरक्षाकाङ्क्षिणो धर्मपरायणा वीराग्रगण्याः पुण्यवन्तो महानुभावा महर्षयश्च समुत्पन्नाः सेयं स्त्रीजातिः कथमधमा गणनीया ? प्रियम्वदे ! परिणेष्याम्यहम् । उपसीदति वेला । तत्र सहचारिण्या कुमुदिन्या यथा चन्द्रो न दृश्यते तथैव मदीयहृदयानन्दिनी चकोरिकाऽपि सम्प्रति भ्रान्तेव प्रतीयते । तस्या आगमनीयं सा सुखावधिमिदानीमल्पीयानेव कालोऽवशिष्यते ।

चन्द्रनामश्रवणसमकालमेव कुमुदिन्या हर्षेण रोमाञ्चितान्यङ्गानि; दुःखेन परिप्लुतमिव

१ उच्छलति । २ हर्षसमुद्रः । ३ जायापत्योः । ४ परस्परम् । ५ सौहार्दम् प्रेम । ६ मर्मतत्त्वम् । ७ शर्म-सुखम् । ८ कल. स्वस्त्री वा । ९ अरित्रम्-जलनौकाचालनदण्डी । ' अरित्रं केनिपातकः ' । १० खनिः-आकरः । ११ कुक्षिः गर्भः ।

६

हृदयम् । युगपदानन्दशोकाविर्भावेन चानया मुक्तानि मौक्तिकानीव नयनाभ्यामश्रुबिन्दुवृन्दानि । दुःखितमनसा चेयं विरचिताञ्जलिर्योगिराजवेषं चन्द्रं जगाद- ' योगिराज ? त्वत्प्रियेण चन्द्रेण त्वां मेलयिष्यामीति यत्प्रतिपन्नं श्रीमता; निष्फलं भविता किमु तत् ? महानुभाव ? न कदापि निरर्थं भवति वचनं सताम् । भगवन् ? संयोजयतु मां निजहृदयेश्वरेण श्रीमान्; शरणं प्रपन्नाऽस्मि भगवताम् ' इति निगद्य कुमुदिनी चन्द्रचरणयोर्निपतिता ।

उत्थाप्य निजकरेण तां राजकुमारीं चन्द्रोऽब्रवीत्– ' कुमुदिनि ? किमिति ग्लपयसि व्यर्थमात्मानम् ? सर्वथा मङ्गलं करिष्यति भगवानखिलमङ्गलमूलमहेश्वरः । स्वल्पेनैव कालेन स्वयमेव चन्द्रस्त्वत्समक्षमुपस्थाता । नास्ति निष्पन्नं मे वचनं निष्फलम् । जानास्येव खलु– " निजवचनपालनाय क्षत्रियबालकैः स्वप्राणा अपि परित्यक्ताः " इति । ' प्रचलति यदि मेरुः शीततां याति वह्निर्न चलति खलु वाक्यं सज्जनानां कदाचित् । ' इति सत्यमवेहि । पवित्रहृदये कुमुदिनि ? वचोभ्रंशतो सर्वाण्येव धर्मकर्माणि विफलतां यान्तीति विश्रब्धं जानीहि ' इति ।

कुमुदिनी । धन्योऽसि, क्षत्रियकुमार ? धन्योऽसि । भवन्मुखारविन्दाद्विनिःसृतैर्मधुररसान्वितवचनैः शान्तिमापन्नं मम हृदयम् । मदीयचन्द्रेण मां संयोजयिष्यति भवानिति दृढं विश्वसिमि । योगिराज ? नाहं विस्मरिष्यामि कदापि श्रीमतामिमं परममुपकारम् ।

एतदालापान्तराल एव क्रूरसिंहः प्रच्छन्नं विलासोद्यानं प्रविवेश । निलीयमान एवाऽयं क्रूरो यत्र कुमुदिनीचन्द्रौ समालपतां ततः किञ्चिद् दूरमुपगम्य स्थितवान् । समालपन्तौ कुमुदिनीचन्द्रौ विलोक्यानितरामाश्चर्यचकितोऽभवत् । मनसा चैव विचारयाञ्चकार– ' अये ? किमिदमवलोकयामि ? अपि वञ्चयतो मां निजलोचने ? ( विमृश्य । ) मा मैवम् ? ■ एवायं मनुजपञ्जरात्कुमुदिनीं मोचयिता ममोग्रवैरिहतकः ? एहि । निलीयमान एवाहं तदीयवार्तालापं शृणोमि ' इति ।

अथ तदन्तिके वर्तमानां प्रियवन्दां विलोक्य कलुषहृदयोऽयं मनसि व्यचिन्तयत्— ' अहह ! कियान् मङ्गलमयोऽयं समयः ? युगपत्सुन्दरीयुगलं लभेयाहमिदानीम् । सद्य एवाहममुं पुरुषं सुरलोकं प्रेषयामि ' इति निगद्य निजकक्षगुटिकायां स्वहस्तं प्रावेशयद् भुशुण्डिकां निष्कासयितुम् । परं नासीदिदानीं भुशुण्डिका तत्कक्षगुटिकायाम् । भुशुण्डिकां निजकिङ्करसकाशाद् ग्रहीतुं विस्मृतवानयम् । अतो मनस्येव जल्पितुमारभत क्रूरः– ' कियानहं मूढो यदाग्नभुशुण्डिकामपि सहादातुं व्यस्मरम् । किमिदानीं करोमि ? कोऽपि नास्ति मदुपकण्ठे । अन्यथा साम्प्रतमेव यदि स्थितस्य स्वभृत्यस्य समीपाद् भुशुण्डिकामानेतुमकथयिष्यम् । कोऽप्यन्यो जनोऽपि न दृश्यते । किमिदानीं करोमि ? ( विमृश्य ) भवतु । साम्प्रतमिदैवान्तरितस्तिष्ठामि । कोऽपि समागच्छन्चितो दृश्येत चेत्तं युक्त्या पलायित्वा स्वभु-

---

१ कक्षगुटिका–' जेब ' इति प्रसिद्धा ।

महाराजश्रीकेसरिसिंहस्य बाहुबलेन चायमजितदुर्गपर्यन्तं नागन्तुं शशाक । महाराजश्रीकेसरिसिंहस्य राज्ये सर्वत्र शान्तिर्देवी विचचार । सानन्दमासीत् प्रकृतिमण्डलम् । धर्मपरायणाः पुरुषार्थशालिनश्च यत्रत्याः पुरुषा बभूवुः । किम्बहुना-राज्यमिदमतीव सुखकरं सर्वथा । ' एतावदुक्त्वा चन्द्रो दुःखेन दीर्घं निरश्वसत् ।

तत्रान्तर्हितः शूरसिंहस्तु चन्द्रोदीरितं वृत्तान्तमाकर्ण्य विचिन्तयामास ' अये ? अजितदुर्गस्यायं वृत्तान्तो ननु ? कोऽयं स्यादेतद्वृत्तान्तनिवेदकः ? संशयितोऽस्मि । उद्विजते मम हृदयम् ' इत्यात्मनैवालप्य पुनरवधायाश्रृणोत् ।

पुनरात्मवृत्तमारभताग्रे वक्तुं चन्द्रसिंहः– ' महाराजश्रीकेसरिसिंहस्य द्वौ तनयावभूताम् । चन्द्रसिंहस्तयोर्ज्येष्ठराजकुमारः[1] यवीयांश्च रणवीरो नामासीत् । अथैकदा राजसभामनुनासीने महाराजे–प्रविश्यान्यतमः प्रतीहारो नरेन्द्रं व्यजिज्ञपत्– ' प्रभो ? बहिः कश्चनैकः स्थविरो निजतनयेन सम समुपतिष्ठते । आकृत्याऽयं कोऽपि राजवंश्य प्रतीयते । सच प्रभुदर्शनमपेक्षते' इति । ' सुखं प्रवेश्यतामयम् ' इति प्रसन्नप्रभुनिर्देशः क्षणेनैव तनयानुगतं वृद्धपुरुषं राजसभामुपस्थापयामास प्रतीहारः । सादरं प्रणम्यैव वृद्धो महाराजमेकतस्तस्थौ । अथापृच्छदेनं नरेन्द्रः– ' कस्त्वम् ? किमर्थञ्चात्र नगरे त्वदागमनम् ? दुःखाकुलया नु भृशं दुःखाकुलोऽसीति प्रतीयसे । कथयास्मद्दुःखनिदानम् ? अपाकरिष्यामहे तदिति । ' शान्तिप्रदमिदं वचनं निशम्यैव वर्षीयान् बभाषे– 'दयालो देव? सूर्यसिंहाभिधोऽहमतिमन्दभागधेयोऽस्मि । अयञ्च ममात्मजः शूरसिंहो नामेति । ' तद्वचनमाकर्ण्याब्रवीन्महाराजः– ' किं सूर्यपुराधीश्वरः सूर्यसिंहो भवान् ? कथममुष्मिन् वेषे ? सत्वरं निवेद्यतां यद्देव घटितम् । किं भवद्राज्यमपि हृतममुना वैरिहतकेन ? इत्यमेव मया प्रतीयते ' इति ।

सूर्यसिंहः । आम् । श्रीमन् ? तथैव संवृत्तम् । मदीयमतिविश्वस्तं[2] बलं रणे निपातितम् । विनशेन मया सवृता पुरद्वारः । अन्ततो भित्त्वा दुर्गभित्तिमरातयः प्रविष्टा नगरम् । मदीयमवशिष्टमप्यमुष्यत शत्रुसेनया । परमाभिकाभिः[3] सपत्नवाहिनीभिरहन्यतास्मदीयसैन्यम् । शत्रुविनिरुधे । अरातिहस्तगमनापेक्षया तत्र पलायनमुचितमवधार्यावां[4] गुप्तमार्गेण बहिर्निरगच्छाव । परिभ्रमन्तौ सूर्यपुरतो दवीयोऽप्यविदूरमागम्यावां कस्याञ्चन धर्मशालायां निवासमकुर्वहि । तत्र मुहूर्तं विश्रम्य स्वराज्यसमाचारं विज्ञातुकामो बहिर्निर्गम्याहं लोकमुखादश्रौषम्– ' मदीयप्रियागारस्य मध्ये व्यधादरातिः । प्रासादमभिसाद् विधाय तत्रत्यमखिलं द्रव्यमलुण्टदरिः । मत्प्राणप्रिया महिषी सङ्ग्रामे निहतं मामवगम्य सतीभूता । शत्रुणा च मम निग्रहणाय परितो दूता विसर्जिताः ।' इति । इदममङ्गलं वृत्तमुपश्रुत्य चिन्ताकुलमनाः अहं धर्मशालामुपगम्य रहसि समुपविश्य व्यचिन्तयम्–' इदानीमहं कञ्चन बलशालिनं राजानं शरणमुपपद्य सेविष्ये । प्राप्यावसरमग्रे शत्रुमभियोत्स्ये । अमरकण्टकाधीश्वरस्य कोऽपि प्रतिद्वन्द्वी नरेन्द्रो नारोहति मे स्मरणसरणिम् । चिरं विचिन्तयतो मे श्रीमानेव तदनु-

१ ऐदम् । २ न्यस्त । ३ येनाभि । ४ घटेन मार्गेण । ५ पद्धतीम् ।

गुणविक्रमशाली नरेन्द्र इति विभाव्य श्रीमच्चरणशरणमुपगन्तुं मतिर्जाता। शरणागतं रक्षिताऽसि भवानित्याशासे।

केसरिसिंहः। भो द्विजेयाः! सूर्यसिंह! शरणागतपरिपालनं हि क्षत्रियाणां परमो धर्मः। तदुभावपि भवन्तौ मदीयराज्ये सुखेन निवसताम्। भवन्तमस्मत्सैन्ये सैनापत्ये नियुनज्मि। भवत्तनयञ्चामुमहमुपसेनापतिं करोमि। सत्यवसरे भवत्प्रसार्थिनं मदीयकर्मफलमास्वादयिष्यामो वयम्।

सूर्यसिंहः। कृपालो राजन्! बहुधोपकृतोऽस्मि महाराजेनाहम्। कथमहमानृण्यमुपयास्यामि श्रीमदुपकारस्यामुष्य। मङ्गलं तनोतु श्रीमतां परमेश्वरः। आवामुभौ कृतज्ञतया सेविष्यावहे भवन्तम्। इत्थं तौ जनकतनयौ अजितदुर्गराजधान्यामूषतुः। कियद्वर्षानन्तरं [1]वार्धक्येन सूर्यसिंहः पञ्चत्वमाप। यावज्जीवमयं भक्त्या सम्यगुपाचरन्नरेन्द्रम्। तन्मरणोदन्तं निशम्य भृशं दुःखितोऽभवन्महाराजः। एतद्घटनानन्तरं चिरकालेन [2]रहसि समाहूयामात्यमवादीन्महाराजः, 'अमात्यवर्य! पश्य—अहोभिर्गणनीयमशीतिवर्षदेशीयोऽस्म्यहम्। न ममास्ति विश्वासो जीर्णकलेवरस्य। तत्तवानुमतिश्चेदहं स्वसमक्षमेव राजकुमारचन्द्रसिंहस्य राज्याभिषेकं कर्तुमिच्छामि। पश्य, चन्द्रसिंहस्यापि प्रत्यङ्गं तारुण्यं स्फुरति। देशान्तरेभ्यो नरेन्द्रकुमारीणामामन्त्रणमपि तदर्थं मुहुर्मुहुरापतति। परं चन्द्रानुगुणा कापि राजकन्यैव नारोहति मम हृदयम्। श्रूयते किल विजयनगराधिपतेः कन्या कुमुदिनी नामानुरूपा चन्द्रस्येति। अनुमन्यसे चेदिदं कार्यद्वयमिदानीं द्रुतमेव निर्वर्तयामीति।'

'सम्यगामन्त्रितं देवेन। तद्राजपुरोहितमाकार्य शुभमुहूर्तं निश्चित्य महाराजविजयसिंहस्य सन्निधौ राजकन्यायाचनाय पुरोहितं प्रेषयाम' इति समुवाच प्रधानपुरुषः। प्रधानानुमत्या महाराजो राजपुरोहितमाहूय निवेदयामास तं सकलं वृत्तमिदम्। तन्मङ्गलकार्यसम्पादनायामी पुरोधा वसन्तपञ्चमीदिनं शुभं निर्धारयामास। ततो महाराजकेसरिसिंहेन महाराजविजयसिंहसमीपे राजकन्यायाचनार्थं राजपुरोहितः प्रहितः। महाराजश्रीविजयसिंहो राजकुमारश्रीचन्द्रसिंहाय स्वकन्यासमर्पणमङ्गीचकार। अल्पेनैव समयेन तं मङ्गलसमाचारमादाय राजपुरोहितोऽजितदुर्गनगरमुपगम्य महाराजाय न्यवेदयत्।

आसीद् दूरे तदानीं वसन्तपञ्चमी। तत्पूर्वमेव नगरे समारब्धाः समारम्भाः। प्रासादे नगरेऽपि सकले [3]कारुवरा विविधस्थानेषु शोभां विधाय स्वकौशलं दर्शयामासुः। एतस्मिन्नन्तरे एकाकीवैका [4]'हृदयोद्वेजिनी भयङ्करी घटना घटिता।' इत्युदीर्य क्षणं मौनमाकलयाञ्चकार चन्द्रः।

विजयसिंहः। राजकुमार! अयं वृत्तान्तस्तु महाराजकेसरिसिंहं मामानुपगच्छति। को नु खलु सम्बन्धोऽस्य वृत्तान्ते भवतः?

'अग्रपुरस्ताद् विज्ञास्यते' इति संक्षेपेणोत्तार्य पुनरग्रे वक्तुमारभत चन्द्रसिंहः— 'सूर्यपुरा-

---

१ अशीतेः। २ एकान्ते। ३ शिल्पकारिणः। ४ मनोमथिनी।

धीशितुः सूर्यसिंहस्य मरणानन्तरमस्य पुत्राय क्रूरसिंहाय महाराजश्रीकेसरिसिंहो राजनगरकोट्टपालपदवीमर्पयामास । दुष्टहृदयः क्रूरसिंहोऽयमतीव नीचप्रकृतिरासीत् । दृढभक्तोऽसौ चण्डिकादेव्याः । बाल्येऽयं कस्यचन योगिनः सकाशादशिक्षत साधारणतन्त्रविद्याम् । स्वच्छन्दमाचरदयं नगरे । येनास्मादतिसंत्रस्ताः प्रजाः । एकदा तुरङ्गमारूढोऽसौ नगराद् बहिः सरोवरतीरमगमत्पर्यटितुम् । दैवयोगेन तस्य सरसस्तीरेऽजितदुर्गनगरश्रेष्ठिनः [1]स्नुषा स्वसखीभिः समं पर्यटन्ती समुपस्थिता । नयनगोचरीकृत्य तामयं क्रूरसिंहो मदनशरताडितः सपद्यपहर्तुं निश्चिकाय । तदनु तुरङ्गमं कशया प्रहृत्य धावमानेनैव वाजिना तस्या अन्तिकमुपगम्य तां तरुणीं निपुणतया पाणिना गृहीत्वा हयपृष्ठमारोप्य पलायतासौ । तदनुगामिन्यः सहचर्यस्तु समाक्रन्दन्त्य एव गृहं प्रगम्य— ' कोऽपि दुरात्मा युवतिमेनामपहृत्य पलायितवान्' इति नगरश्रेष्ठिनं न्यवेदयन् । वृत्तान्तमिममुपश्रुत्य नगरश्रेष्ठिनो निकेतने हाहाकारोऽजनि । स्नुषागवेषणार्थञ्च परितः प्रेषिताः प्रेष्याः ।

इतोऽयं क्रूरसिंहस्तां [2]वनितामादाय निर्जनपथेन [3]निजसदनमाससाद । ललनारत्नमिदं निजचन्द्रशालामुपनीय चार्थं समुपभोक्तुमियेष; परमुच्चकुलप्रसूता युवतिरियमनुमतिमात्रं तिरस्कृतवती । समयेऽस्मिन् कनिष्ठराजकुमारो रणवीरस्तदीयनिकेतन[4]वर्त्मना गच्छन्—'एहि, इयद् दूरं यदागतोऽहं क्रूरसिंहं साक्षात्कृत्य गच्छामि' इति मनसैव विचार्यासौ क्रूरसिंहसदनं प्रविवेश । क्रूरो गृहद्वारं पिधातुं विस्मृतवानिति रणवीरोऽनायासेनाभ्यन्तरं प्रविश्य तं विचिन्वन्नेव चन्द्रशालामुपययौ । शुश्रावायं तत्र किमपि कोलाहलजातमिव । गवाक्षेण निपुणं निरीक्षमाणोऽयं तस्या अबलाया उपरि बलात्कारं कर्तुं प्रवर्तमानमिव क्रूरसिंहं ददर्श । 'पामरोऽयमवश्यं मम शीलभङ्गं विधास्यति ' इति भिया सा स्वहस्तेनैवात्मकण्ठमापीड्य पश्यत एव तस्य निजप्राणान् विससर्ज । गतजीवितामिमामवलोक्य आत्महतकोऽयं भयेन वेपमानो निजपापं गोपायितुमना धैर्येण तस्या मृतकलेवरं स्वकरवालेन शकलीकृत्य भूमावाच्छादयितुमारेभे । क्षणमात्रेणैवेदं वृत्तम् । यावदभ्यन्तरं प्रवेष्टुं विचिन्तयति रणवीरस्तावदेव वृत्तमिदमखिलम् । क्रूरसिंहस्येदमति[5]निर्घृणं कृत्यमालोक्य तं मनस्येव रणवीरो बहुविधं धिक्कृतवान् । तन्मुखाच्च— ' अरेरे बहिःसुन्दराकार; अन्तरतिकिल्बिषागार क्षत्रियकुलाङ्गार ? पापैः परिपूर्णं तव हृदयम् । चण्डाल ? किमिदमाचरितं त्वया ? स्त्रीहत्या विहिता खल्वन्ते ? ' इति शब्दा निर्जग्मुः ।

अथ रणवीरोऽकस्मात् क्रूरसमीपमुपस्थितवान् । एनमवलोक्यैव क्रूरो भिया चकम्पे । विवर्णतयाऽऽश्रितमिव वदनमस्य । ततो मृदुगिरा क्रूरं पप्रच्छ रणवीरः 'क्रूरसिंह ! किन्नु विधीयते भवता ? अस्ति किमपि कारणमेवमाचरितुं ते ! ' इति । किमुत्तरं तस्मै प्रदेयमिति नाज्ञासीदसौ । अन्ततोऽयं दुरात्मा रणवीरमपि निहन्तुं निश्चित्योत्तरमदत्त्वैव तस्मै-

---

१ पुत्रवधूः । २ 'स्त्री योषिदबला योषा वनिता महिला' इत्यमरः । ३ भवनम् । ४ गृहमार्गेण । ५ निर्दयम् ।

'एष आगच्छामि' इति निगद्य कोष्ठान्तरं गतवान् । कोष्ठतश्चैकां निशिततरां छुरिकां बाहुवस्त्रान्तर्गोपयित्वा बहिरायातोऽयम् । बालोऽपि धूर्तोऽयं रणवीरस्तदाशयं विज्ञाय तत्क्षणमेव तत पलायितुं निश्चित्य क्रूरमभ्यधात्— 'क्रूरसिंह ! त्वं हत्यामकरोरिति जानाम्यहम् । स्वचक्षुषा तत्कृत्यमालोकि मया । किन्तु मा भैषीः ! नाहमिदं वृत्तं कमपि निवेदयिष्यामि । पश्य, अद्यापि तवावशिष्यन्ते कलेवरशकलानीमानि भूमौ प्रच्छादयितुम् । अपावृतञ्च गृहद्वारम् । यत् कोऽपि चेदिहागच्छेन्महाननर्थो भविता' इति गत्वाऽधस्ताद् द्वारं संवृणोमि । समापयात्मकृत्यं त्वम्' इत्यभिधाय प्रत्युत्तरमनपेक्ष्यैवायं रणवीरो नीचैस्तलीयं बहिरागत्य स्वप्रासादं प्रति प्रतस्थे । ' इति निगद्य चन्द्रः क्षणं तूष्णीमस्थात् ।

विजयसिंहः । ( ससंभ्रमम् । ) राजकुमार ! मध्ये ब्रवीमीति क्षम्यताम् । कं क्रूरसिंहमुद्दिश्य कथयसि भवान् ? ।

'राजकन्यायाः कुमुदिन्या अपहर्तारं श्रीमतामेव सेनापतिं दुरितात्मानं क्रूरसिंहमनुलक्ष्य कथयामि' इति प्रत्यवादीत्समुत्पन्न[1]मन्युः श्रीचन्द्रसिंहः । आः ! किं कथयसि ? इत्यमीचकरोऽयं दुरात्मा ? हन्त ! ! पूर्वमहं चेद् व्यज्ञास्यम्, सत्वरमेव दुरात्मानममुं व्यापादयिष्यम् । चिरन्तनमेनं कदापि नाऽपोषयिष्यम्' इत्यात्मगतं विचिन्तयामास विजयसिंहः ।

ततोऽन्तर्हितः क्रूरस्तु निशम्यैतामुं वृत्तान्तमतिमात्रमाकुलीबभूव । आकर्ण्यैव स्वविनाशं विजयसिंहमुखात्संजातमन्युर्मनसि प्राजल्पदमी— 'आम् ! स एवाहं क्रूरसिंहः ! सोऽहं क्रूरसिंहः ! ! भोरे विजयसिंह ! त्वं मां विनाशयितुं चिन्तयसि किन्तु तत्पूर्वमेवायं विकरालः केसरी स्वप्रागघोरस्त्वामेव विदार्य व्यापादयिष्यति खलु ! अये ! कोऽयं सकलवृत्तमिदमावेदयिता ? नावगम्यते मया ! ! एवं तु केवलमहं कुमुदिन्या रक्षकत्वेनैव परिचितोऽस्मि । कोऽभिप्राय खलु भवेदस्यैतद्वृत्तनिवेदने ? अये ! सकलं ममैतद्वृत्तमयं विजानीते—इति प्रत्येमि । सम्प्रति ममैव वृत्तान्तं कथयति । मदीयान्येव छिद्राण्यवगृणोति ? । हन्त ! किमहं कुर्याम् ? निरुपायोऽस्मि, अन्यथा सद्य एवामुष्य रसनामच्छेत्स्यम्' इति मनसैव विमृशन् पुनरेव क्रूरः शान्तिमालम्ब्य दत्तकर्णः तस्थौ । 'परम् । राजकुमार ! ततः किं जातम् ?' इति जोषमासीनं चन्द्रसिंहं निरीक्ष्य समगादीन्महाराजविजयसिंहः ।

पुनरग्रे परन्तु प्रावर्तत चन्द्रः— 'तदनु कथमुपरि नायातो रणवीरोऽद्यापीति' तमन्वेषमाणो नीचैरवततार क्रूरः । रणवीरमनवलोक्य बभूवायं संभ्रान्तमनाः । अथ द्वारं संवृत्य पुनरयं चन्द्रशालामुपगम्य शिरान् शवशकलानवनौ सम्यगाच्छाद्य, स्नात्वा स्वकर्मणो निवृ- शायितुं पर्यङ्के पपात । [2]निशीथप्राया सम्प्रति निशीथिनी । परं नाऽऽलिङ्गितोऽयं निद्रया दुरात्मा । इतस्ततोऽपि पर्यङ्के परिवर्तमानः कथं कथमपि हृदयं शान्तं विधाय निद्रापरतन्त्रो बभूव ।

---

१ मन्युः क्रोधः । २ निशीथोऽर्धरात्रः ।

अन्येद्युः प्रातःसमये सकलेऽपि नगरे प्रससारेयं नगरश्रेष्ठिपुत्रवधूहरणवार्ता । तस्या मार्गणाय गता अनुचराः सम्पूर्णां रजनीं नगरवीथिकासु, नद्युपरिसरेषु वनान्तेषु चापि सर्वत्र गवेषयाम्बभूवुः; किन्तु क्वापि नालभ्यतेयं तरुणी । घटनयाऽनया सकलमपि राजनगरं शून्यमिवाबभासे । सचिवसेनानायकराजकुमारचन्द्रसिंहकोट्टपालक्रूरसिंहप्रमुखजनपरिवृतो राजसभायां समासीनोऽभवन्महाराजश्रीकेसरिसिंहः । अत्रान्तरे समाक्रन्दन्नतिदुःखेन राजसभां प्रविश्य नगरश्रेष्ठी– ' न प्राप्ताऽधुना तस्याः प्रवृत्तिरपि ' इति नरेन्द्रं न्यवीविदत् । भयानकामिमां घटनामाकर्ण्य महाराजो रुषारुणनयनः कोट्टपालम्– ' क्रूरसिंह ! नैतावदवधि कदापीदृशी हृदयप्रमाथिनी घटना घटितास्मन्नगरे । अद्य तु कथमियं संवृत्तेति नावगम्यते खलु ! तदनुसंधीयतां त्वया । त्वय्येवोत्तरदायित्वमस्य कर्मणः ' इत्यादिदेश । परं कुतः प्रवृत्तिरानीयेत कोट्टपालेन ? स तु स्वयमेवापराधीति किमनुसंदधीत ? महाराजनिदेशमुपश्रुत्यावदद्धौ क्रूरसिंहः ' कृपालो ? ह्योऽखिलाऽपि रात्रिरतिवाहिता तदनुसंधान एव मया । संशोध्यापि सकलं नगरं नालभ्यत क्वापि प्रवृत्तिर्मया तस्या ' इति । तदीयं वचो निशम्यातिमात्रं चिखेद महाराजः । सभासदोऽपि सर्वे चिन्तातुरा बभूवुः । अत्यन्तमेव विललाप नगरश्रेष्ठी । क्षणेऽमुष्मिन् रणवीरो राजसभां प्रविवेश । रणवीरमवलोक्यैव क्रूरसिंहो भियाऽकम्पत ।

' आगतोऽसि वत्स रणवीर ? ' इति प्रोच्य प्रेम्णा समाहूय स्वसमीपमुपवेश्यावकथन्महाराजः ' वत्स ? अद्यास्मन्नगरे संवृत्तैका भयङ्करी घटना । अस्मदीयनगरश्रेष्ठिनः पुत्रवधूमहरत् कोऽपि दुरात्मा । नोपलभ्यतेऽसौ क्वापि ' इति । अथासनादुत्थाय प्रोवाच रणवीरः– ' तात ! तदपहारकस्तु समीप एवास्ति । कथं न निगृह्यते तातचरणैरिति ? ' अये ? कोऽयं चण्डालः ? अविलम्बितं कथय माम् ' इति संक्षेपमाचष्ट राजेन्द्रः । ' तात ? अस्मन्नगरकोट्टपालस्य क्रूरसिंहस्यैवास्य दारुणं विचेष्टितमिदम् ' इति प्रकाशमभाषिष्ट रणवीरः । ' आ एवं किमु ? ' इति साश्चर्यं प्रोचुः सर्वेऽपि सभ्याः ।

तत्क्षणमेव चन्द्रहासमाकृष्य महाराजः क्रूराभिमुखमभिगत्य यावत्तदुपरि कौक्षेयकं निक्षिपति तावदेव युवराजचन्द्रसिंहो महाराजं निवार्य निवेदितवान् ' तात ? शाम्यतु भवान् । मादौ निशम्यतामपराधिनः कथनम् । कथमीदृशं साहसं विदधाति श्रीमान् ' इति । अथ क्षितिपतिः पुनर्निजासने समुपविश्य क्रूरमप्राक्षीत्– ' कथय–दुरात्मन् ? अस्ति तवापराधो न वेति । '

' देव ! सर्वथा निरपराधो जन एष ' इत्यात्मानं गोपायितुं प्रत्याचष्ट क्रूरः । तदीयप्रत्याख्यानं संश्रुत्य व्यचिन्तयन्महाराजः– ' अये ? कथमिदानीमनुसंधेयोऽयं दोषी ? ' इति विचिन्तयन्नेव रणवीराभिमुखं व्यलुलोके महीपालः । स्वपितृचरणानामाशयं विज्ञाय रणवीरोऽब्रवीत्– ' तात ! एष दुरात्मा ह्योदिने सायंसमये सरोवरतीरात्तां तरुणीमाहृत्य स्वगृहं नीतवान् । तामयं चन्द्रशालायां नीत्वा तस्याः पातिव्रत्यं भ्रंशयितुमनास्तदुपरि बला-

१ रथ्यासु विशिखासु प्रतोलीषु वा ।

रकारं कर्तुं प्रवृत्तवान्। तदानीमहं तेन पथा शयनात् प्रत्यावर्तमानः क्रूरसिंहं साहाय्यकर्तुं तदीयगृहाभ्यन्तरं प्राविशम्। विचिन्वन्नहममुं चन्द्रशालायामगमम्। तत्र यथाक्षेण निरीक्षमाणोऽहं तस्या निरागसो ललनाया उपरि बलात्कारं कर्तुमुद्यन्तमेनमपश्यम्। सा तरुणी तु निजसतीमतभङ्गभियाऽऽत्महत्यामकरोत्। सहसा [1]परासुं तामवलोक्य भीत्याऽयं पलायितुं दुष्टः। तथापि साहसमाधाय स्वतरवारिणा [2]तदवं शकलीकृत्य तस्या निजपापं [3]निगूहितुं तानि खण्डानि भुवि निखातवान्। तदनुसंधाय दोषमस्य निर्णेष्यति श्रीमानिति।'

श्रुत्वैव तद् वचनं तत्क्षणमेव क्षितीन्द्रश्चन्द्रसिंहं वीरभटैः सह क्रूरसिंहनिलयं गत्वाऽनुसंधातुमादिष्टवान्। अतोऽतिव्याकुलमनाः स्वयं क्रूरो भयेन ततोऽपसर्तुमवसरं प्रतीक्षितवान्। चतुरोऽमात्यवरस्तदाशयं विज्ञाय क्रूरसिंहं [4]निगडयितुं वीरानादिशत्। तदादेशानन्तरमेव बन्दीकृतोऽयं वीरद्वयेन। एतस्मिन्नन्तरे तत्तरुणीकलेवरखण्डान् पोटलिकायामाबध्य कतिपयवीरभटानुगतो युवराजचन्द्रसिंहस्तत्रोपस्थाय पोटलिकामुद्घाट्य तान् कलेवरखण्डान्महाराजं समदर्शयत्। तदीयमीदृशं निर्घृणं दारुणञ्च कृत्यमालोक्य सर्वे सभ्या चित्रलिखिता इव स्तब्धाः समवातिष्ठन्त। वराकोऽयं नगरश्रेष्ठी स्वस्नुषाया हृदयकस्मात् दारुणं मरणं विलोक्य [5]विक्षिप्त इवाभवत्। क्रुधाऽतिमात्रमतप्यत नरेन्द्रः। तदनु रोषाग्निना दिधक्षुरिव क्रूरसिंहमपृच्छन्महाराजः 'कथय, नराधम ! किं कथयस्यधुना' इति। महाराजस्य प्रश्नं निशम्य दुष्टहृदयोऽयं धैर्येण स्वदोषं प्रत्याचष्ट। दोषमनङ्गीकुर्वाणमेनमवलोक्य महाराजोऽतिरोषारुणनयनः सन् संक्रुद्ध्य जगाद– 'अरे विश्वासघातिन् क्षत्रियापसद ! किमहं त्वां करोमि ! तव दुष्कृतमवलोकयता मया त्वत्कलेवरस्य शतशः शकलानि करणीयानि। परं स्वदोषमनकाय प्रतिश्रुतमस्ति त्वां रक्षयितुमिति विवशोऽस्मि। प्रतिश्रुतभङ्गभिया न किमपि तव कर्तुं पार्यते। रे कृतघ्न ! त्वामहं जीवन्तं विमुञ्चामि। आज्ञापयामि केवलं सर्वस्वहरणमसं त्वां दीर्घकशाप्रहारदानेन ताडयितुम्। तवापराधे पदशतं मृत्युना दण्डनीयत्वम्। किन्तु स्ववचननिबद्धोऽहं जीवन्तमेव त्वां त्यजामि' इति।

राजेन्द्रनिर्देशानन्तरमेव क्रूरसिंहं सभामध्ये समानीय नग्नदेहं विधाय सुदृढया कशया ताडयितुमारेभिरे वीराः। कतिचित्प्रहारैरेव क्रूरोऽमुना। मारणेन बाहुमूलादस्य क्षतोत्थरुधिरधारा। शतार्द्धं प्रहतोऽयं निःसंज्ञीभूय भूमौ पपात। तथ एव वीराः शोणितकलङ्कं निरपेक्ष्य प्रत्यागतचेतनं विधाय तमवशिष्टैः कशाप्रहारैरताडयन्। अस्य पृष्ठे [6]दण्डघृणा स्पष्टलिङ्गं कशाप्रहारजन्यमस्ति। दृष्ट्वैव क्रूरोऽवाङ्मुखोऽवस्थितवान् सभामध्ये।

अथैनं सम्बोध्य प्रावदन्नरेन्द्रः– 'नराधम ! अद्य एव त्यक्तव्यम् नगरम्। नाहमालुलोकयिषामि ते मुखम्। कदाचित् त्वं यदि मत्राज्यपरिसीमानि दृश्येथाः, तर्हि अवश्यं मरणमिति त्वमवेहि। अपसर मम सम्मुखतः। वीराः ! बहिरपसारयत मुष्टिप्रहारैरेनम्' इति। वीरास्तं मुष्टिप्रहारैः बहिर्निःसारयामासुः। इदमेव ताम्बिकमहत्त्व दुरात्मनः।

१ मृताम्। २ खड्गेन। ३ प्रच्छादयितुम्। ४ बन्धनेन बद्धुम्। ५ विमूढः। ६ यष्टिप्रेरितेन।

राजसभायाः बहिरपसारणानन्तरमयं स्वनिलयं प्रगम्य सञ्चितहीरकमध्यादनर्घरत्नद्वयमादायाजितदुर्गनगरं जहौ ।'

एतावदुदीर्य पुनस्तूष्णीमवस्थितवानयं चन्द्रसिंहः ।

ततोऽन्तर्हितः क्रूरस्तु मनसि– ' अरेरे दुष्टवैरिहतक ! घारयैनामात्मरसनाम् । अये ! कोऽयं नरपिशाचो भवेदिति न विज्ञायते ! ' इत्युक्त्वा पुनर्दत्तकर्णः स्थितः ।

क्षणं मौनमाकलय्य पुनरग्रे प्रवृत्तवाननुपश्यंस्तु चन्द्रसिंहः– ' ततो महाराजश्रीक्षेमारिसिंहो नगरश्रेष्ठिनं सान्त्वयित्वा-गतं न शोच्यमित्यभिधाय बहुविधमुपदिश्य तं निजालयं व्यसृजत् । अथ गच्छता कालेन नगरनिवासिनो जना घटितमिदं वृत्तं विस्मृत्य मुदा दिनानि गमयाम्बभूवुः । उपस्थिता वसन्तपञ्चमी । राजमहालये राज्याभिषेकसंभारा अक्रियन्त जनैः । परं किन्तु वा निर्धार्यते नरेण किन्तु वा क्रियते प्रभुणा ? येनावगम्यतेऽयमगम्यो महिमा परमात्मनः । दैवगतिमवगन्तुमपारयित्वैवेश्वरः कथं प्रातस्स्मरणीयः सुगृहीतनामधेयो महीमहेन्द्रः श्रीरामचन्द्रो वनमगमिष्यत् ? कथं वा सत्यवादी पुण्यश्लोको वसुमतीवासवः श्रीहरिश्चन्द्रो दुःखाम्बुनिधौ न्यमङ्क्ष्यत् ? महान्तो देवस्वरूपा अपि पुरुषा दैवगतिमधिगन्तुं नापि शक्ताः; नापि वा शक्ष्यन्ति ।

एकदा सायंकाले नृशंसः क्रूरसिंहः प्रच्छन्नवेषेण नगरं प्रविश्य कनिष्ठराजकुमारं रणवीरं गवेषयामास । समयेऽस्मिन् रणवीरो मृगयाया निवृत्य नगरं प्रति प्रतिष्ठते स्म । दैवमन्यैव क्रूरसिंहस्तेन सङ्गतो बभूव । प्रच्छन्नवेषममुमभिज्ञातवानाश्चर्यपरवशो बुद्धिमान् रणवीरः । रणवीरमालोक्य क्रूरसिंहस्तदभ्यर्णमागम्य विरचिताञ्जलिः सविनयं क्षमामयाचत । दुष्टरितस्यास्य प्रार्थनया विप्रलब्धोऽयं रणवीरः । जालाभ्यन्तरपतितं मीनमिव निजवागुजालमवतारितं रणवीरमवधार्य ततः कियद्दूरं नीत्वा तस्मै स्वसन्निहितां शर्करां समर्प्य– ' राजकुमार ! क्षमया कृतार्थितोऽयं भवता । श्रेयस्तनोतु भवतो भगवानजस्रम् । भुज्यतामयं देव्याः प्रसादः । ' इति निगद्य तां शर्करां तमाशयत् । शर्कराभक्षणसमक्षणमेव भ्रमरिकयाऽऽक्रान्तं रणवीरमस्तकम् । ' विप्रलब्धोऽस्म्यमुनेति ' विज्ञाय यावदाक्रोष्टुं प्रवर्तते रणवीरस्तावदेवायं क्रूरस्तं निरुद्धगिरमकरोत् । क्षणेनैव रणवीरमुत्थाप्य हयपृष्ठमारोप्य काननपथेन पलायत क्रूरसिंहः ।

इतस्तु 'संवृत्ता रजनी । कथमद्यापि नायातो रणवीरः ' इति चिन्तयन्नास महाराजः । मुहूर्तानन्तरमेवान्यतमो वीरभटो यो रणवीरं क्रूरसिंहकरपञ्जरगतमवालोकयत्–समुपेत्य महाराजान्तिकम्– ' प्रभो ! कश्चिदपरिचितः पुरुषो राजकुमारमपहृतवान् ' इति राजानं व्यजिज्ञपत् । समाचारमुपश्रुत्यामुं तत्क्षणमेव महाराजः कतिचनाश्वारोहान् रणवीरगवेषणाय प्रेषितवान् । प्रातःकालपर्यन्तमितस्ततो गवेषयित्वा निराशहृदयाः परावृत्ताः-सादिनः । हाहेत्युच्चरितार्तनादभरितं जातं समस्तं पुरम् । रणवीरमनुपलभ्य महाराजो नितरां किंकर्त-

१ धर्षयितुम् । २ पुण्यकीर्तिः । ३ महीमहेन्द्र' । ४ पथि । ५ मात्स्यम् । ६ भ्रमरिकाशिरोभ्रमणम् । ७ वणिक्ः ।

व्यतामूढ इवाभवत्।। तदा युवराजचन्द्रसिंहः स्वपितुरमाश्वास्य तदीयहृदयं सान्त्वयित्वा तदाज्ञया भ्रातुरन्वेषणाय निर्जगाम। मुहुर्मुहुरीदृशया भयानकघटनया महाराजकेसरिसिंहस्तदीयाः प्रजाश्च संभ्रान्तचित्ता बभूवुः। सर्वेषामेषां दुरितकर्मणामयमेव क्रूरसिंहो निदानमिति सर्वेऽमन्यन्त।

इत्थं मासद्वयं व्यतीतम्। तदपि नालभ्यत प्रवृत्तिरपि रणवीरस्य। तत्रापि रणवीरमार्गणाय गतश्चन्द्रसिंहोऽपि न निवृत्त इति दुःखान्तरमिदमापतितम्। अतो महाराजोऽतिशोकाकुलोऽजनि। अखिलमैश्वर्यं श्मशानमिवास्य प्रतिभाति स्म। अथ विरक्त इव प्रत्यहं पुण्यभद्रातीरे योगाभ्यासार्थं गच्छति स्म। मुहुर्मुहुर्जायमानां भयानकघटनां पर्यालोच्य बुद्धिमान् मौलिवसुरः प्रधानवरो महाराजमेकाकिनं गन्तुं न्यवारयत्। परं नाभ्युपेयाय मन्त्रिवचनं नरेन्द्रः।

एकदा तमःपटप्रावृतायां कृष्णपक्षनिशायां योगमभ्यसितुं प्रातिष्ठत पुण्यभद्रातीरं नरेन्द्रः। प्रभुणा निवार्यमाणोऽप्ययममात्यवर्योऽङ्गरक्षकमेकं केनाऽप्यलक्षितगमनं महाराजपृष्ठगामिनमकरोत्। योगाभ्यासविधिमवसाद्य पुण्यभद्रातीरान्निववृते महीवल्लभः। तदलक्षितानुगमनोऽयमङ्गरक्षकोऽपि क्षितिपतिमनुससार। 'विलक्षणा दैवघटना'। न प्रभुस्तां कोपि विज्ञातुम्। मध्यावर्तमानो मेदिनीशः शस्त्रपाणिभिर्वीराणां पञ्चविंशत्या पथि समाक्रान्तो बभूव। निःशस्त्रपाणिर्महाराजस्तानाशक्नोन्निरोद्धुम्। कश्चिदपरिचयमप्राक्षीन्नरेन्द्रः-- 'अये ? किमर्थं भवद्भिरहमाक्रान्तोऽस्मि। किमीदृक्षो भवन्तः ? केसरिसिंहनामाहं नृपतिरस्मि' इति।

महाराजवचो निशम्य तेषामधिपतिरभिमुखीभूय महाराजमब्रवीत्- 'केसरिसिंह ! मया बन्दीकृतोऽसि त्वम्। त्वामहमधुना दण्डयिष्यामि। परिचिनोषि मां किमु ? शृणु--यं त्वं सर्वसभ्यजनसमक्षं भृशमवामंस्थाः स एवायं क्रूरसिंहोऽद्य त्वां प्रग्रहीतुमिह समायातोऽस्ति। तदेहि, त्वमिदानीमायाहि मे शरणम्' इति। क्रूरसिंहवचांसि कर्णे कुन्तैव क्रोधानलेन जाज्वल्यमानोऽभवन्महाराजः। अथ मुष्टिकाभ्यां तरस्विनं प्रहर्तुमारेभे नरेन्द्रः। 'किम् ! बन्दीकृतो महाराजकेसरिसिंहः किमु ? कथमेवं संप्रोभवीति ? रे दुरात्मन् नराधम ! तिष्ठ, अधुनैव तव गर्वमपहरामि। जम्बुकैः केसरी समाक्रान्त इति श्रुतं कदापि किमु ?' इति वदन्नेव परितः पर्यभ्राम्यन्महाराजः। तस्य प्रचण्डमुष्टिप्रहारैः परलोकं प्रस्थितवन्तः पञ्च पुरुषाः। महाराजस्य पृष्ठतोऽङ्गरक्षकः स्वकर्तव्यमनुतिष्ठन् वीरगतिं गतवान्। निजान् पञ्चपुरुषान् रणे निपतितानवलोक्य कोपाध्मातवदनः क्रूरसिंहः स्वसैनिकानवदत्- 'मदीयवीराः ! किं पश्यथ यूयम्। सत्वरमेवैनं निगृह्य बन्दीकुरुत' इति। स्वनायकनिदेशसमकालमेव सर्वेऽपि सैनिकाः सोत्साहं महाराजस्य परितः समापतन्। महाराजोऽप्यतुलधैर्येण शत्रुसाम्यमकार्षीत्। रिपूणां शस्त्रप्रहारैर्नरेन्द्रवपुरतितरां प्रगाढक्षतमभूत्। प्रारब्धा रक्तधारा भृशं वपुषः। तस्मान्निःशक्तो भूत्वा भूमौ निपत्य मूर्च्छितोऽभवन्महाराजः।

१ कदर्थनम्। २ अस्रधारा-रक्तप्रवाहः।

मूर्छितमेवैनं बन्दीकृत्य शिबिकायामारोप्य निनाय क्रूरसिंहः । नृशंसेनामुना स्वस्थानं नीत्वा व्यापादितो नरेन्द्र इति श्रूयते किल मया । अथासौ क्रूरोऽमरकण्टकाधीश्वराय स्वराज्यात् कञ्चिद्देशं समर्पयितुमुररीकृत्य तदीयसैन्यसाहाय्येनाजितदुर्गनगरं प्रविवेश । महाराजकेसरिसिंहस्य विश्वस्तोऽमात्यस्तु महाराजमकस्मात् प्रनष्टमवगम्य स्वल्पसैन्यमादाय महाराजान्वेषणाय गतोऽभवत् । सोऽपि तदानीं नासीन्नगरे । तथापि स्वावशिष्टसैन्यसाहाय्येन महाविक्रमशाली सेनानीर्जयसिंहः सपत्नानवरोद्धुं सम्मुखो बभूव । महापराक्रमं प्रदर्श्यान्ते स्वसैन्यैः सममयं सेनापतिर्वीरगतिं गतः । ततोऽनायासेनैव नगरं प्राविशदयं क्रूरसिंहः ।

एष दुरात्मा प्रजा भृशमुपप्लुत्य ताभ्यो विपुलं द्रव्यमादायाजितदुर्गराज्यममरकण्टकाधिपतये रणजितसिंहाय समर्प्य तस्मादपि क्षितिपतेः पुष्कलं द्रविणमग्रहीत् । तदनु क्रूरसिंहोऽयमजितदुर्गं परित्यज्य कियन्ति दिनानि कान्तारे समतीत्य श्रीमता प्राणान् संरक्ष्य श्रीमत्कृपाभाजनश्च संवृत्य श्रीमन्तं सेवमानो न्यवात्सीदत्र ।

इतस्तु रणवीरमन्वेष्टुं प्रस्थितश्चन्द्रसिंहः स्वबन्धुमनवाप्य निराशः सन् निजनगरं प्रति निवर्तमानः पथि महाराजगवेषणाय निर्गतेन सैन्यानुगतेन मन्त्रिसत्तमेन सङ्गतो बभूव । चन्द्रसिंहं परिचित्य मन्त्रिवरः यथावगतं सकलं राजकीयवृत्तं तस्मै निवेद्य विशेषतः — 'अस्मदीयं राज्यमधुना रणजितसिंहनृपतेर्हस्तगतम्' इति न्यवेदयत् । ततो महाराजमरणोदन्तमश्रावयदमात्यवरः । स्वपितृचरणमरणवृत्तमुपश्रुत्य रुरोदातिवेलं चन्द्रसिंहः । तमाश्वासयाञ्चकार प्रधानपुङ्गवः । मुहूर्तानन्तरमात्महृदयं शान्तं विधाय चन्द्रसिंहः प्रधानवर्यमकथयत्— 'अमात्यवर्य ! आगम्यताम् । स्वनगरं गत्वा प्रत्यर्थिनोऽपसारयामः' इति । राजकुमारवचः श्रुत्वा प्रोवाच प्रधानवर्यः — 'राजकुमार ! न गन्तव्यं नगरेऽस्माभिरधुना । यतोऽस्मत्पार्श्वे स्वल्पमेवास्ति सैन्यम् । तस्य विरोधिहतकस्येयमाज्ञा नगरे— 'क्वापि केसरिसिंहस्य तनयौ दृश्येतां चेत्तौ प्रगृह्य मदन्तिकमानेयौ' इति । साम्प्रतमसाम्प्रतं तत्र गमनम् । पुनः प्राप्तकालं यतिष्यामहे' इति राजकुमारं बोधयित्वा सम्यगुपदिश्यासौ मतिमतां वरो मन्त्रिपुङ्गवः श्रीमत्सनीडे स्वविश्वस्तसैन्यैः समं समुपस्थाय श्रीमन्तं सेवमानः सम्प्रति प्रधानपदवीं समलङ्करोति ।

विजयसिंहः । ( साश्चर्यम् ) किं केसरिसिंहनरेन्द्रस्य विश्वस्तो मन्त्रिवरः सम्प्रति मदुपकण्ठे वर्तते ? आम् ! इदानीमेव विदितं खलु मया यदयं गुणवानमात्यवर्योऽसकृन्मह्यं सम्यगनुमतिं ददाति । अस्य बुद्धिचातुर्येणैवाहं रणजितसिंहनृपतिना सह योद्धुमपारयम् । अन्यथा तदभिसम्मुखं स्थातुमसमर्थ एवाहमासम् । धन्योऽयं बुद्धिशाली ! परं योगिराज ! तदा को नु खलु भवान् ? इदानीमपि नैवाज्ञायि कोऽपि भवद्वृत्तान्तो मया ? ।

चन्द्रसिंहः । अविलम्बितमेव मामभिज्ञास्यति श्रीमान् ।

---

१ शिबिका—पालखी । 'पल्की' इति भाषा ।

**विजयसिंह** । आ एवम्? भवतु । अथ चन्द्रसिंहस्य किमभूत्? तद् विज्ञायते चेन्निवेद्यतां भवता ।

**चन्द्रसिंह** । तदप्यहं वेद्मि । श्रूयताम्—'प्रधानवर्यतः पृथग्भूत्वा चन्द्रसिंहो रणवीरं विचिन्वन्नेव वनाद् वनान्तरं विचचार । परं क्वापि न लब्धो रणवीरः । तदासौ व्यचिन्तयत् 'एहि । अहमपि विजयनगरं गत्वा तं नृशंसं क्रूरसिंहं तदीयदुष्कर्मफलमास्वादयामि । तत्रैव कदाचिन्मम प्रियबन्धोरपि प्रवृत्तिरुपलभ्येत?' इति विचिन्त्य श्रीमदन्तिकमागन्तुं निरियाय । राजकुमारोऽयमागच्छन्नरण्ये विस्मृतवर्त्माभवत् । मार्गं मार्गयत एवास्याग्रतो पुरस्तादुपस्थिता निशादेवी । परं नालभतासौ पन्थानम् । अतो निराशवदनो राजकुमार इतस्ततो बभ्राम वने । अत्रान्तरे तत्कर्णशष्कुलीमविशदेकः करुणचीत्कारमयो ध्वनिः । चीत्कृतध्वनिमुपश्रुत्य राजकुमारस्तां दिशमभिद्रुत्य 'सुन्दरबालिकामेकामाहरतस्त्रीन् पुरुषानपश्यत् । अवधीदमी तेषां पुरुषद्वयं भुशुण्डिकया । चन्द्रहासेनाथ चन्द्रसिंहो योद्धुमारेभे तृतीयेन नरेण । प्रतिद्वन्द्विनो मण्डलाग्रो राजकुमारचन्द्रहासेन समं सम्भूय वसुन्धरातलमालिलिङ्ग । अतः स्वासुरामप्राणत्राणमनीषया वञ्चयित्वा राजकुमारचक्षुषी पलायाञ्चक्रे । योऽसौ प्राणरक्षणार्थमपसृतः पुरुषः सोऽस्य राजकुमारचन्द्रसिंहस्य प्रचण्डवैरी क्रूरसिंह एवाभवत् ।

तदनु चन्द्रसिंहस्तां बालामुपगम्य सान्त्वयित्वा तदीयवृत्तान्तमन्वयुङ्क्त । आत्मपरिचयं ददत्या तया बालया—'कुमुदिनी नामाहम्' इति न्यवेदि । कुमुदिनीमादाय श्रीमच्चरणशरणमुपागतो नैषार्य योगिराजः किन्तु महाराजश्रीकेसरिसिंहस्य युवराजश्चन्द्रसिंहो नाम राजकुमारोऽयं साक्षाद्भवन्तमभिवादयते' इति निगद्य चन्द्रो महाराजश्रीविजयसिंहं प्रणनाम ।

अथाऽकस्मादाश्चर्यचकितः सन् व्याजहार विजयसिंहः—'मदीयकुमुदिनीरक्षकोऽयं योगिराजवेषश्चन्द्रसिंहराजकुमारः किमु?' इति व्याहृत्य मुदा समुत्थाय महाराजश्चन्द्रसिंहं हस्तेन गृहीत्वा गाढमालिलिङ्ग । जगाद चायम्—'चन्द्रसिंह! अननुगुणमिदमकारि भवता । आसीद् भवदीयमेव राज्यमिदम् । किमर्थमात्मा गोपायितो भवता?' इति राजनन्दिनी तु योगिराज एवायं 'चन्द्रसिंह' स्वयमिति विज्ञाय त्रपया भुवमालुलोके ।

॥ ❀ ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ गिरिराजगौरवसोऽङ्के कुमुदिनीचन्द्रे चतुर्थी कला ॥ ❀ ॥

---

# अथ पञ्चमी कला ।

" तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः " ( भागवते )
" हृदयं त्वेव जानाति प्रीतियोगं परस्परम् । " ( उत्तररामचरिते )
" अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ "
( पञ्चतन्त्रके )

" दैवी विचित्रा गतिः । " ( स्फुटम् )
" उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ " ( रघुवंशे )

विलासोद्यानमध्यवर्तिनः क्रीडाशैलस्य कन्दरायां निलीनो योऽयं क्रूरसिंह इयत्कालपर्यन्तं योगिराजवेषस्य चन्द्रसिंहस्य वृत्तान्तमाकर्णयति स्म; 'सोऽधुनाऽकस्माच्चन्द्रसिंहं प्रकटीभूतमवलोक्य केनाऽपि चक्रेणाहन्यमान इव पीतं रक्तं कृष्णमिव च दिङ्मण्डलं विलोकयन् कराभ्यां शिरो धृत्वा भूमौ निषसाद । इदानीं क्रूरसिंहोऽयमत्र कथमायात इत्यस्माभिरवगन्तव्यम् ।

गुप्तगृहे योगीन्द्रस्य तिरोधानानन्तरमयं नृशंसस्तदीयनिदेशमुल्लङ्घ्य रणवीरं निहन्तुं सन्नद्धोऽभूत् । अथ तस्य का दशा संजातेति विद्वांस एव वाचयितारः । वर्तुलं मण्डलाकारेणोपरि परिभ्राम्यन्नयं क्रूरः कुत्रचिद् विकटायामटव्यां निपपात । निपतत एवास्यास्थीनि विशीर्णानि बभूवुः । चिरकालमसौ क्रूरो वने रुग्णः समवर्तत । अथ वन्यैः पुलिन्दैरुपचरितोऽयं संजातदर्पोऽचिकित्सया । तेषां प्रयत्नेन स्वल्पेनैव कालेनायमुल्लाघोऽजायत । तान् वन्यपुलिन्दान् युक्त्या वशयित्वा तेषां परिवृढः संवृत्य निकटवर्तिनः पत्तनग्रामानलुलुण्ठत् । ततोऽयं तस्मिन्नेवारण्ये महाराजश्रीविजयसिंहस्य प्राणानरक्षदिति विदितं च खलु ! ! तत्राप्यमुना कृतघातिना भूत्वा गुप्तगृहं प्रति प्रास्थायि । वन्यैः पुलिन्दैरेवास्मै प्रदर्शितमभूदिदं गुप्तगृहम् । ते सममयं गुप्तगृहमेवाध्युवास । अतीते पञ्चाब्दे योगीन्द्रशापानुसारं सस्मारायं गुप्तगृहम् । गुप्तगृहस्मरणेनैवायं क्रूरहतको रणवीरं व्यापादयितुं त्वरया तत्रोपययौ । परम्—को नु खलु हन्यात् प्रभुरक्षितम् ? तद्गमनात्पूर्वमेव रणवीरस्ततो निर्गत्य भ्रान्त्या सङ्गतो बभूव । रणवीरापसरणवृत्तं निशम्यैव क्रूरसिंहः कोपकृशानुदन्दह्यमानहृदयस्तत्क्षणमेव तुरङ्गममारुह्य रणवीरनिग्रहणाय निर्ययौ । परिभ्राम्यन्नयं क्रूरोऽद्यमद्दिवसे विजयनगरपरिसीमनि समाजगाम ।

---

१ कृष्णचन्द्रः । २ सम्प्रयोग—संसर्ग । ३ उपाविशत् । ४ पुलिन्दाः—म्लेच्छजातयः । ५ उल्लाघ—नीरोगनिर्मुक्त । ' उल्लाघो निर्गतो गदात् । '

तत्र गुप्तवेषेणानुसंदधताऽमुना— 'समयेऽस्मिन् राजकन्या कुमुदिनी विलासोद्याने वर्तते' इति प्रवृत्तिरलेभे।

रणवीरं गवेषयितुं निर्गतस्यास्य वृत्तान्तमिममुपलभ्यैव हृदयं परमानन्दसमुद्रे निमग्नम्। कुमुदिनीमुपलब्धुमयं भूपमानुर इति नगरे गत्वा ततो द्वित्रान् सहचरानानीय बाह्यवर्त्मनैव विलासोद्यानमुपाजगाम। स्वाननुचरान् बहिरेव स्थातुमादिश्य स्वयमेकाकी विस्मृतराष्ट्रः— प्रच्छन्नं विलासोद्यानाभ्यन्तरं प्रविश्य— 'कुमुदिन्या सह स्थितः कोऽयं युवा?' किञ्चालपती'ति श्रोतुमनाः समीपवर्तिन्यां क्रीडागिरिगुहायां न्यलीयत। कुमुदिनीचन्द्रयोर्वार्तां निशम्य अज्ञायि तेन सकलं रहस्यम्। निशम्य च चन्द्रसिंहमाविर्भूतमवलोक्य तस्य नयनयोरग्रतः समजायतान्धकार इव; यतोऽयं शिरो धृत्वा भुवि न्यषीदत्।

अत्रान्तरे भृत्यवेषेण रणवीरमन्त्रोपस्थाय महाराजं विजयसिंहं प्रणम्य सविनयम्— 'प्रभो! संजातप्रायोऽयं सायंसमयः। तदिदानीं भोजनाय प्रस्थीयतामत्रभवता' इत्यभिधायैकतस्तस्थौ।

भोजनसमयं सम्प्राप्तमवगम्य महाराजश्चन्द्रसिंहमगादीत्— 'चन्द्रसिंह! एहि। उपस्थिता भोजनवेलेति गन्तव्यमधुना' इति।

चन्द्रसिंहस्तु— 'प्रस्थीयतामत्रभवता। अल्पसमयेनैवाहमागमिष्यामि' इति निगद्य ततः स्तोकमन्तरं गत्वा पर्यटितुमारभत।

अथ 'अपि समायासि वत्से कुमुदिनि?' इति कुमुदिनीं पप्रच्छ विजयसिंहः। तत्र स्थातुकामया तयाऽपि— 'तात! एषाऽहं प्रियम्वदया सह भवदनुपदमेवायामि। प्रस्थीयतां भवता' इति जगदे। ततः प्रमुदितहृदयो महाराजविजयसिंहः प्रासादं प्रातिष्ठत। राजकुमारो रणवीरोऽपि केनाप्यनुपलक्ष्यमाणगतिरेकतोऽन्तर्धाय स्थितवान्।

तातं गतवन्तमालोक्य प्रियम्वदामुवाच कुमुदिनी— 'सखि! परमेश्वरकृपयाऽन्ततो मदीयहृदयलतावल्लरी प्रफुल्लैव! अद्यायं मे चन्द्रो नयनचकोरद्वन्द्वानन्दनो जातः। अभ्युदितं मम सौभाग्यचन्द्रेणाधुनेति।'

प्रियम्वदा तु— 'सखि! अमन्दानन्दमयेऽस्मिन्समये पुष्पहारमेकं रमणीयं निर्मायानयामि' इति निगद्य कुसुमान्यवचेतुं पुष्पवाटिकायां गतवती। दूरं गतां प्रियम्वदामालोक्य चन्द्रः कुमुदिन्या नेदीयान् संवृत्य तामुवाच— 'सुन्दरि! अपि प्राप्तो न वा तव चन्द्रः? पालितं न वा मया भवद्वचनम्? किमिति नालप्यते त्वया?' इति।

कुमुदिनी तु ह्रिया भूतलं निभालयाञ्चकार। पुनश्चन्द्रोऽब्रवीत्— 'देवि! किमिति नालप्यते? पूर्वं तु बहुतरमालप्यते स्म। साम्प्रतन्तु भाषणेनापि नानुकम्प्यते त्वया?' इति। तदापि भूतलं विलोकयन्त्येव स्थिता कुमुदिनी।

ततश्चन्द्रसिंहः कुमुदिन्या नेदिष्ठो भूत्वा तदीयकरं विधृत्य— 'प्रिये! अपि कुप्यसि मह्यम्?

---

१ अतिहर्षाकुले। २ विरच्य।

अपराद्धं नतु मया किमपि ते ? कुमुदिनि ? कथं न संभाषसे ? ब्रूहि, मन्मनोमोहिनि ? ब्रूहि सकृद्' इति प्रोवाच ।

कुमुदिनी तु— ' गम्यताम् । नाल्पनीयं मया साकं ' मित्यभिधाय चन्द्रसिंहपाणि पद्मनमपसारयामास ।

चन्द्र । ( विहस्य ) प्रिये ? किमपि कारणं नन्वेव कर्तुम् ?

कुमुदिनी । प्रवितब्बको नतु भवान् ।

चन्द्र । ( सविस्मयम् । ) वञ्चकोऽस्म्यहं किमु ?

कुमुदिनी । आम्, आम् । वञ्चको भवान् ।

चन्द्र । ( सस्मितम् ) कथं नु विप्रलब्धासि ? उपहृतो भवेय तद्विवेकेन चेत्ततु अहम् ? कुमुदिनी तु— ' अये मत्प्राणवल्लभ ? मदीयहृदयेश्वर ? ' इति वदन्ती प्रेम्णा चन्द्रमालिलिङ्ग । विलोचनाभ्यामविरलं विगलन्ती प्रेमाश्रुजलबिन्दुधारा मुक्तावलीव तस्या कपोलतलयुगलमलङ्कृतवती । आत्मपटखण्डेन तदस्रजलबिन्दुवृन्दं प्रोञ्छ्य चन्द्रः कुमुदिनी मवादीत्-' जीवनसङ्गिनि ? ईदृशे मङ्गलमयप्रसङ्गे नार्हसि खलु विलोचनाभ्यां बाष्पबिन्दुजलं विगलयितुम् ' इति ।

कुमुदिनी । प्राणेश्वर ? असदृशमिदमकारि भवता ? माहं विज्ञापनीयाऽभूवं ननु भवतेदृग्वेषान्तरधृताऽपि ? समीपवर्तिनमवलोक्य भवन्तमहं किमपदानन्दिष्याम् ? अहो ! विचित्रा तव माया । अहमपि सुतरां वञ्चिता खलु ! ! भवतु । ममाप्यधुनोपस्थितोऽवसरः । तद् भवानपि सार्ता । ' ( इति वदन्ती जहास । )

चन्द्र । मदीयहृदयकमले ? त्यज चिन्ताम् । जातोऽयमिदानीन्तु भूयानानन्दो ननु ?

कुमुदिनी । आम् । हृदयवल्लभ ? आगम्यताम् । सम्प्रति यत्र प्रासादं प्रति प्रतिष्ठामहे । प्रतिपालयेरन्खलु तातोऽस्मान् । किन्तु, अयि प्राणनाथ ? कस्मिन्नपि महति विचारसिन्धौ निमग्नो भवानिति भवन्मुखमुद्रया प्रतीयते । तत् किन्तु विचिन्तयति भवान् ? अपि मैव निवेदयिष्यति माम् ? ।

[ ततोऽन्तर्हितो रणवीरस्तु स्वाग्रजमनो राजकन्यायाश्च प्रेमालापमाकर्ण्य नितरा मानन्द । ]

चन्द्र । कुमुदिनि ? को न विचारयति खलु ? विचारशून्यो नरो नरो न किन्तु पशुरे वायम् । तत्कथं न विचारयामि ? प्रिये ? यावन्न भवेत् पितृवैरनिर्यातनं तावदुदासिष्य एवाहम् । एहि-प्रिये ? मुहूर्तमात्रं सम्मुखोनायामासन्दिकायामुपविशाव ' इति प्रोच्य चन्द्रसिंह कुमुदिनीं सहादायाम्यन्दीमुपगन्तु प्रवृत्तवान् । अत्रान्तरे प्रियम्वदा समुपातिष्ठत । विनोद कुर्वाणौ कुमुदिनीचन्द्रौ विलोकयन्तितरामानन्दन्ती व्याहृतवती प्रियम्वदा- ' हला कुमुदिनि ? गृह्यतामयं रमणीयपुष्पगुम्फितो मनोहर पुष्पहार । अलङ्क्रियतामनेनाम

१ परिपृच्छ्य । २ उदासीनो भविष्यामि ।

प्रियतमकण्ठस्त्वया ' इति पुष्पहारं कुमुदिन्यै ददौ । सा तु लज्जापारतन्त्र्यतया-ऽधोऽवलोकितवती ।

अथ कुमुदिनीकराम्बुजात्पुष्पहारमादाय चन्द्र. कुमुदिन्या एव कण्ठे स्वीयं मूर्तिमन्तम-नुरागमिवासंसज्ज रुचिरम् । सा तु तेन पुष्पहारेण दयितेनेव कण्ठार्पितबाहुपाशेन समालिङ्गितमिवात्मानं मन्वाना मन्देक्षणेन मेदिनीतलमालोकयन्ती स्थितवती । लज्जमानां-मिमामवलोक्य प्रियम्वदयोक्तम्— ' सखि ? किमिति ह्रणीयसे ? न लज्जनीयं त्वया ' इति ।

ततः प्रियम्वदा तौ कुमुदिनीचन्द्रौ समीपस्थासन्दीसकाशं नीतवती । तामधिष्ठिता त्रयोऽपि ते वार्ताविनोदं वितेनिरे ।

इतो मूर्छितः क्रूरसिंहस्तु संज्ञामुपलभ्येदानीमवदत्— ' चन्द्रसिंह ? परित्यक्तव्योऽयमसारः संसारस्त्वयाधुना । त्वां प्रतीक्षते तत्र सुरलोकगतः पिता । विह्वलोऽयं खलु त्वद्विरहेण । तदधुना त्वमपि सज्जीभव त्रिदिवगमनाय । आः । अमुनैव मम मनीषितं धूलिसात्कृतम् । असावेव मम करपञ्जरात्कुमुदिनीमपहृतवान् । हन्त ? राजकन्यया सह समासीनमेनमव-लोक्य दन्दह्यते मदीयहृदयम् ! अये ? क्षणमपि न वर्तते मदभ्यर्णे । कश्चिदितो मानवोऽपि न दरीदृश्यते; यं क्षणमानेतुं बहिः प्रेषयेयम् ? ' इति वदन्नेवायं दुरात्मा समन्ततो निरीक्षयाञ्चकार । उपगतमस्य नयनपदवीमन्तर्लीनो रणवीरः । रणवीरं निरीक्ष्यैव विचिन्तितवानसौ— ' किमर्थमत्रायं निलीनो भवेद् बालः ? अये ? अयमपि बालो निर्निमेषलोचनाभ्यां कुमुदिनीमवलोकयति । किमहमिवायं किमपि रत्नमपहर्तुमुपागतो नु ? एवमपि सम्भवतितराम् । तदेनमहमाहूय युक्त्या वशीकृत्य भुशुण्डिकामानेतुं प्रेषयामि ' इति विमृश्य शनै रणवीराभ्यर्णमुपससर्प । अवलोक्यैवैनं चमत्कार रणवीरः । परं संवृतास्य-वदनविकारभारमह्नवत्सोऽयं शान्तमुद्रया स्थितवान् । तदुपकण्ठमुपेत्यासौ तदीयस्कन्धे हस्तं निधाय मन्दस्वरमवादीत्— ' कुमार ? किमर्थमिहान्तर्हितोऽसि त्वम् ? ' इति ।

रणवीरः । कमनीयमादौ स्वनाम, पश्चादहमात्मानं परिचाययिष्यामि ।

क्रूर.। ( स्वगतम् । ) चतुरोऽयं बालो दृश्यते । ( प्रकाशम् । ) कुमार ? क्रूरसिंहाहं सम्पत्तिशाली पुरुषोऽस्मि ।

रणवीरः । मा एवम् ? अतिहर्षकरमिदम् । भवतु, कुत्र भवतो निवासः ?

क्रूरः । इतोऽनतिदूरं निवासस्थानं मे ।

रणवीरः । अस्तु । तदत्र किमर्थमुपास्यामि महानुभावेन ?

क्रूरः । ( विमृश्य ) कुमार ? कश्चिद् भृत्योऽभिलष्यते मया । तदर्थमेव ममात्रागम-नम् । पश्य-तुभ्यमहं सकलमात्मवृत्तमावेदयामि । तदिदानीं त्वयापि निवेदनीयमात्म-वृत्तम् ।

---

१ आस्फालयत्। २ लज्जया। ३ लज्जसे।

रणवीर । ( सपरिहासम् ) सत्यमभिहितं श्रीमता ! अहमपि भवानिव पर्यटक ।

क्रूर । ( सामर्षम् ) कुमार ! त्वं पर्यटकमवधारयसि किमु माम् ?

रणधीर । क्षम्यतां दयालुना । भवन्मनो व्यथितं त्वया ममामुना भाषणेनेति नाहमवागमं खलु ! अहमपि कश्चन पर्यटकोऽस्मि । कैङ्कर्यान्वेषणार्थमितस्ततोऽहं संचरामि, किन्तु नोपलभ्यते निजमनोऽनुकूलं कोऽपि श्रेष्ठी ।

क्रूरः । ( सहर्षम् । ) कुमार ? प्रसीदामितमामहममुया तव भाषणभङ्ग्या ।

रणधीर । सत्यमाह श्रीमान् !

क्रूरसिंह । तत्त्वं भविष्यसि मम किङ्कर ?

रणधीर । सहर्षमङ्गीकरोमि कैङ्कर्यमहं श्रीमताम् ।

क्रूर । तदहं त्वां विशिष्य स्वाम्यर्पणेन नियुनज्मि । यदहं त्वां कथयामि तत्त्वया दृढं स्मरणीयम् । शृणु—मम निवासस्थले स्थित्वा यद्यत्त्वमाकर्णयिष्यसि यद्यद्वा द्रक्ष्यसि तत्तत्कदापि कस्मैचिदपि न निवेदनीयं त्वया । किञ्चिदपि कदापि चेत्तत् प्रकाशयिष्यसि तदा नियतमेवा मरणमुपस्थितमित्यवेहि ।

इत्थं तदीयवचो निशम्य रणवीरो व्यचिन्तयत्— ' अस्य संनिधौ निवासेन तु सर्वमस्य दुश्चरितं विज्ञास्यते मया । सत्काळमथाहं पितुर्वैरनिर्यातनं करिष्यामि । भवतु । ' इति । अथाऽयं प्रोवाच क्रूरसिंहम् ' श्रीमन् ! नाशङ्कनीयं किमपि मद्विषये भवता । सन्तोषयिष्यामि सुतरामहं भवन्तमात्मकृत्यैरिति । '

क्रूरसिंह । किमभिधानं ते ?

रणधीर । ' रणधीर ' इति मां वदन्ति जना ।

क्रूरसिंह । अहो ! कियन्मनोहरमभिधानम् ? रणधीर ! इदानीमहं त्वां कार्यमेकं कथयामि । तत्त्वं सत्वरमेव करिष्यसीति प्रत्येमि ।

रणवीर । किमिदमभिहितं श्रीमता ? प्राणानपि विजह्यामहं भवदर्थम् ? ( इति क्रूरसिंहं विश्वासयितुमवोचद् रणवीर । )

क्रूर । पश्य । ये इमे सम्मुखीनाश्रयो जना उपविष्टाः सन्ति तेषामन्यतम पुरुषोऽस्ति द्वे च स्त्रियौ विद्येते । अपि दृश्य ते त्वया ? ।

रणवीर । आम् दृश्यन्ते । क एष यो भवतस्तैः सार्धम् ?

क्रूरः । नास्ति स्वार्थातिशयोऽत्रास्माकम् । शृणु तद् युवतियुगलमपहरणीयमस्माभि । परं यदवधि पुरुषोऽयं वर्तते तदवधि [illegible] शक्यमिदमिति स्वामितो गत्वाऽस्योद्यानस्य बाह्यदेशे स्थितेभ्यो भृत्येभ्य इदं मदीयमङ्गुलीयकं प्रदर्श्य भुशुण्डिका सीसकगोळिका अपि कति चयाः समुपानय ।

रणधीरः । बाढम् । तत् किं कर्तुं निर्णीतं भवता ?

क्रूरः । त्वयि समागते पुरुषममुं व्यापाद्य तत् सुन्दरीद्वयमपहरिष्यामो वयम् । रण

धीर ! येयं यवीयसी सुन्दरी दृश्यते तया सह त्वां परिणाययिष्यामि । किं प्रमुदितोऽसि नवा सम्प्रति ! ( इत्युक्त्वाऽतिमन्दमताडयत् तदीयस्कन्धे ॥ ) ।

'अतिप्रमोदोऽनम्' इत्युदीर्य शूरसिंहप्रदत्तमङ्गुलीयकमुपादाय रणवीरो गतवान् । गच्छंश्चायं मनसा-- 'आततायिदुष्टक ! शूरसिंह ! त्वं कियदपि प्रयत्नं कुर्याः परमयं रणवीरो नैव सफलयिष्यति तव मनोरथम् । त्वं मां बालं मन्यसे किन्तु नास्म्यहं बालः । वयसा यद्यपि बालोऽस्मि तदप्यवगच्छामहं तव दुरभिवाञ्छितम् । वैशालीकिशोरोऽस्म्य-हमपि । माहरिष्यामि तत्रासुनहम् । दुरात्मन् ? मदीयबन्धुमाहन्तुमध्यवसितं त्वया किन्तु यावदहं जीवामि कदापि नैव फलिष्यति तव वाञ्छितम् । दुष्ट ? निस्तन्द्रोऽवति-ष्ठस्वाधुना त्वमस्माद् रणवीरात् । एहि, साम्प्रतं तु पोषणीयोऽयं मया निजाग्रजन्मा' इत्यालप्य यत्र कुमुदिनीचन्द्रौ न्यषीदतां ततः कियद्दूरं स्थित्वा कस्यचन महीरुहस्या-भिमुखमवलोकयन् प्रोवाच तारस्वरेण-- 'अयि सारिके ? हे कीर ? शीघ्रमुड्डीयेतो गच्छतौ । समक्षोऽयं लुब्धको वां ग्रहीतुम् । न चरितमुपयातं युवाम्' इति प्रोच्याऽयं संकेतवाचमनिमकृत । तदीयमित्थं कृत्यमवलोक्य चन्द्रमुवाच कुमुदिनी-- 'हृदयेश्वर ! इह विलोकयतु भवान् । कियान् सुन्दरोऽयं बालः ? एष तरुवनिरुद्धशाखावलम्बिविह-ङ्गमैः समं किमपि हृदयङ्गमं समालपन् क्रीडति' इति ।

नावगतमधारि किमपि मयाऽस्मुनेति सञ्जपाय तं श्रावयितुकामः पुनरयं तारस्वरमिमं श्लोकमपठत्--

"यद्वधि मृगयुः दृश्यागतश्चायं नहि विद्धाति भवन्तमेष तावत् ।
अपसर कलहंस ! हंसिकाभ्यां झटिति विसृज्य मनोज्ञहोदंबीकम् ॥"

इति व्याहृत्य रणवीरः कुमुदिनीचन्द्रयोरमलो गच्छविजम्भावरेऽतो गन्तुं संकेतयित्वा त्वरया निष्क्रान्तः ।

चन्द्रसिंहो रणवीरकृतं संकेतं तदीयश्लोकरहस्यमपि सम्यगवगत्य समुत्थाय विलोकया-ञ्चकार । कोऽपि नायात्येतस्मादमुना वनान्तराले ? अथासौ विचिन्तितवान्-- 'किन्तु यदाऽनृतमुदितं भवेद् रणवीरेण ? नैव, नैवं कथयेदसत्यं कदापि रणवीरः ! तदधुनाऽस्मा-दस्थानाद् द्रुतमपसरणमेव श्रेयस्करम् । यतो मया सह तिष्ठति सम्प्रति सुन्दरीद्वयम् । तदेतत्स्त्रीयुगलं निर्भयस्थले प्रापणीयमेव मया' इति निश्चित्य कुमुदिनीमवादीच्चन्द्रः-- 'यदि प्रिये ! मान्यतामितोऽस्माभिरस्थानात्प्रस्थीयेत ।'

कुमुदिनी । आम् । गन्तव्यमस्माभिः । किन्तु प्राणनाथ ! कथमयं बालो गच्छन् किमघोषत् ? ।

चन्द्रसिंहस्तु-- 'अग्रतएवं विज्ञापयामि तद्' इत्युदीर्य कुमुदिनीप्रियम्वदे सह नीत्वाऽ-श्वमेतो ततो निर्यातः । गच्छन्तौ कुमुदिनीचन्द्रौ विलोक्यातितरामाकुलोऽभवत्कुमारः ।

१ 'कदापि नृगदयाभीतो मृगयुर्दुष्टकोऽपि सः' इत्यपरः । २ प्रेमपरीक्षणम् । ३ शीघ्रम् ।

परं किमिव कर्तुं पारयेयिव्यहरणोऽयम् ? अत्रान्तर एष धावन् रणवीरस्तत्रोपगम्य शूराय भुशुण्डिकां समर्प्यैकतोऽवतस्थे ।

शूरसिंहः । रणवीर ! यद्दीयन्त शकुन्ता ।

रणवीरः । ( सविस्मयम् ) किम् ? किमुच्यते भवता ? कुतः शकुन्ताः ?

शूरः । ( स्फुटम् ) तस्तु दरीद्वयमस्माकमपसृतम् ।

रणवीरः । ( कृत्रिमभावदर्शनपुरस्सरम् । ) किम् ? अपसृतं किमु ? हृदयस्येवावधौ !

शूरसिंहः । ( स प्रमादयितुमिव । ) रणवीर ! किमिति त्वयोदास्यते ? त्वं यदि मद्‌गितके कृतज्ञतया समर्थिष्यसे तदा तु तद्वेशमाप्यधिकसुन्दरीं कुमारीं तुभ्यमानीय समर्पयिष्यामि ।

रणवीरः । ( स प्रतारयन्निव । ) नैव श्रीमन् ? नाभिलष्यते मया कापरया । मम तु–या भवता मे प्रदर्शिता–सैवाभीप्सिता । चिरकालमह महीरुहान्तरितो भूत्वा तस्या फुल्लितवदनाम्बुजं विलोकयन् स्थितोऽभवम् । तामुपलब्धुं भृशमातुरोऽस्म्यहम् । अर्पणीया चेत्सैवानीयार्पणीया मे ।

‘ अतिसमीचीनम् । तदायाहि साम्प्रतं’ मित्याख्याय रणवीरं सहादाय शूरसिंहो विलासोद्यानाद् बहिराजगाम । तत्र स्थितयोर्गृहीतायर्वरुणयोरनुचरयोरन्यतर पञ्चाननानुमादिश्याऽऽरोनेयमेकं रणवीरमारोप्य स्वयमपरं वनायुजमारुह्य काननाभिमुखं प्रचचार । क्षणेनैवामी निम्नकटुककुटमवटीतुङ्गनितिकुञ्जसंकुले महारण्ये निलिल्यिरे ।

अमन्दानन्दमयं दिनमिदमघतन विजयनगरे । अद्य कुमुदिनीचन्द्रयो पाणिग्रहणमङ्गलैर्महामहो भवितेति किमिव वर्णनीया ननु निखिलनगरसुन्दरालङ्कारसुषमा । तथाहि–मनोहरतोरणहारकमनीयकुसुमगुम्फाकरकृतमल्लरीवल्ल्यै समुन्नतैर्भवनवीवृन्दमनोज्ञकाभितरं प्रफुल्लमिव पुलकाङ्कितमिव चालोक्यते नगरमखिलम् । सर्वतो हि मङ्गलतूर्यमृदुलवाद्यानां सुखास्वाद्यानां हृद्यो मधुरध्वनय श्रूयन्ते । क्वचिन्माङ्गल्यहासिनीनां सुवासिनीनां श्रुतिमञ्जुलमभूतमङ्गलगीतय , क्वचिच्च ब्रह्मविदां ब्राह्मणानां पुण्यमया वेदघोषा , क्वचिन्मृदङ्गानां निनादा , कुत्रचित् रणन्तीनां विपञ्चीनां पञ्चमरागभङ्गतरङ्गाश्चाखिलजनहृदयं लावयन्ति । पथि पथि केतकवासैर्वासितवाससो महार्हरमणीयवेषजुषो मनोहरमणिमयभूषणभूषितलोचनीयवपुषो सुन्दरवपुषो नागरिकवृन्दानां सञ्चार , चत्वरे चत्वरे निगमोपदेशासूतवर्षिणां महर्षीणां सदुपदेशा , गृहे गृहे होमहुतहव्यद्रव्याणां सुगन्धा , प्रत्यङ्गणं रम्भास्तम्भरम्भकन्दला , प्रतिकदलीस्तम्भमाम्राकिसलयावली, प्रतिद्वारं वन्दनकुसुममालिकाश्च कामपि परमानन्दरस-दोहसहोदरामिव मनोमुदं जनयन्ति जनिमताम् ।

---

१ निःशब्द । २ पक्षिण । ३ कन्या–रदिपः प्रमदा वा । ४ प्रसादनीयम् । ५ वनायुदेशभवहयम् । ६ निम्नोन्नतम्–ऊमूर । ७ महोत्सव । ‘ मह उद्धव उत्सवः ’ । ८ परमा शोभा । ९ ध्वजा । १० प्रिय । ११ वेदनादाः । १२ विपञ्ची वीणाविशेषः । १३ वासवासिताः सुगन्धयुक्तमिति ।

अथापराह्णे मनागवलम्बमाने वरुणदिशमरुणकिरणे भगवति प्रभाकरे महता समारम्भेण साकं दुन्दुभिमर्दलझल्लरीपणवानकाहलगोजाडिण्डिमप्रमुखमनोहरवाद्यध्वनिबधिरितहरिदन्तरालः प्रेक्षकजनमनोनयनानन्ददायी स्वस्थानादुच्चलितो वरयात्रासमारोहः । अग्रतोऽस्य सुमुखटोमण्डितबाहुदण्डानां कटितटावलम्बितमण्डलाग्राणां कलितवेत्रवाणानां सौवर्णवर्णविभूषितोत्तमाङ्गानां पुरःसरवाग्वारोहाणां प्रचलति पङ्क्तिपरम्परा । तदनु नदति स्म मधुरमधुरमतिमनोहरमेकं सौवर्णरङ्कं हृद्यं वाद्यम् । अथ भुजमूलारोपितचन्द्रचिह्नितकुन्तभराणां कौन्तिकवीराणां राजिविकरं विराजते । अनन्तरं त्रिविधदेशान्तरेभ्यो निमन्त्रितै रुचिरनेपथ्यशालिभिर्मणिगुच्छकमण्डितमौलिभिर्विचित्रविपुलालङ्करणालङ्कृतकाञ्चनमयविमानाधिरूढैर्नरेन्द्रमण्डलैरधिष्ठितानां मौक्तिकमण्डनमण्डलविमण्डितशुण्डादण्डगण्डस्थलानां दन्तावलानामवलीपटलं विलसति । ततः प्रासप्रविष्टानां नगरश्रेष्ठिनां मण्डलं विभाति । पश्चाद् विकोशकरवालकराणां सादिवीरवराणां बलं लसति । तदनु दौन्दुभिकनादप्रिकगौरभिकाहलगोजिकप्रमुखैरधिरूढा मन्दमन्दं प्रचलन्ति गजेन्द्राः । अथ सर्वेषां पृष्ठभागे सौवर्णस्तबकालङ्कारविभूषितसर्वाङ्गं सुन्दरमेकमाजानेयमारूढः कनककुसुमपङ्क्तिविचित्रिताङ्गाम्बरशाली विविधसुन्दरहारललितकण्ठः शातकुम्भवलयालङ्कृतकरकमलः कन्दर्पसौन्दर्यदर्पविजित्वरदेहदमः धर्मावतिरिव साम्बरमुखगणदलोऽजितदुर्गाधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजकुमारः श्रीचन्द्रसिंहश्चक्षुष्मतां चक्षूंषि मनांसि च युगपदाकर्षन्निव शोभते ।

धाराधामसमारोहोऽयं राजनगरमध्यस्थबकपर्यन्तमायातः । विलोक्यैवामुं सकला नागरिकजनाः 'विजयतां महाराजश्रीविजयसिंहः ।' इति तारस्वरेण प्रफुल्लहृदयैर्जयनदमजूघुषन् । हर्म्यहट्टालिकाचन्द्रशालादिगवाक्षजालकेऽवस्थिताभ्यो विनिता भवि ''सौभाग्यवतीभ्यो निजपाणिपङ्कजविकीर्णैर्मौक्तिकैः कुसुमैर्लाजैश्चाराद्भिवर्धमानं वरदेवमनुपवाकिरन् । 'अहो ! आत्मसंसिकुरुमेव वरं वृतवती राजकन्या । महाभाग्यशालिनी सा देवपं कुमुदिनी ।' इति रामकुमारचन्द्रसिंहरूपं निरूप्यैव परस्परं वधूवरयुगलं प्रशशंसुर्युवतयः । शनैःशनैः शिबिकायानेन समारोहः प्रासादमद्वारम् । तत्रैनं वरदेवं पुष्पवृष्टिभिः सम्भावयामासुः सखिकाः । ततो वाजिवरादवतीर्यायं चन्द्रसिंहः प्रासादाभ्यन्तरं प्रविश्य विशालं विवाहमण्डपमास्तरणमुपगम्य रत्नखचितं महार्हसिंहासनमलञ्चकार । पितृविधिना राजपुरोधा यथा मधुपर्कादिभिर्विधिवद्देवमर्चयित्वा समन्त्रपाठं तयोः पाणिग्रहणमङ्गलं कारयामास । अथ वेदमन्त्रान् पठन्तौ वधूवरौ हव्यद्रव्यैर्हुताशनं हुत्वा मन्त्रैर्मिथः प्रतिज्ञाय सप्तपदीविधिमनुष्ठाय यथोचितादरं महाराजश्री–

---

१ पारितप्रभुकानाम् । २ शीर्षकम् शिरस्त्राणम् । ३ कुन्ता भल्लाः । 'तद्वन्तः कौन्तिकाश्च ते' । ४ नेपथ्यं वेषः । ५ गजानाम् । ६ शातकुम्भं सुवर्णम् । ७ कन्दर्पः कामः । ८ हरिः । ९ 'हटकसम्' । १० 'हर्म्याणि धनिनां वासः' । ११ मानावनतुन्दम् । १२ दीपितः । १३ 'आदाद्दुरदर्पणयोः ।' १४ स्वयमानम् । १५ विलोक्य । १६ दास्यवन्तः । १७ राजपुरोहितः । १८ आर्घ्यैः पूजाद्रव्यैः ।

विजयसिंह राजमहिषीं प्रभावतीं पूज्य बान्धवगणञ्च यथाक्रममखिलान् प्रणेमतुः । सर्वेऽपि ' सौभाग्यमस्तु, सौभाग्यमस्तु ! ! ' इत्याशीर्भिः सम्भावयामासुः । महाराजप्रमुखैर्नरेन्द्रैः नगरश्रेष्ठिभिश्चान्यैश्चापि वधूवराभ्यां विविधमनर्घमुपायनं स्वाधिकारानुरूपं वितीर्णम् ।

अथ चन्द्रसिंहं कुमुदिनीम्—यतो महाराजश्रीकेसरीसिंहस्य प्रधानवर्यः प्रतापसिंह समुपविष्टोऽभूत्—तत्र सत्वरं निनाय । समुभौ दम्पती प्राणमताम् । प्रधानवरोऽथ कुमुदिनीचन्द्रौ स्वकरेणोत्थाप्य गद्गदगिरा व्याजहार—' युवराज ! युवराज्ञि ! आयुष्मन्तौ भूयास्तां भवन्तौ । रक्षताच्चिरन्तरं वां परमकारुणिकः परमेश्वरः । अये ! महाराजश्चेदिदानीमजीविष्यत् कियदानन्दितोऽभविष्यदसौ । ' इत्युदीर्यैत्वा रत्नजटितत्सरुरमणीयं कृपाणं चन्द्रसिंहकटिप्रान्ते निबद्धवान् । तदनु कुमुदिनीचन्द्रौ चन्द्रशालायां गतवन्तौ । तत्र सुपरिष्कृते दुग्धफेनतल्पपर्यङ्के हंसतूलिकायां मृदुतूलिकायामुपविश्य प्रफुल्लहृदयौ समालपतां तौ दम्पती। अत्रान्तरे गुप्तवेषेण कनिष्ठराजकुमारो रणवीरस्तत्रोपेत्य कुमुदिनीचन्द्रौ प्राणंसीत् ।

चन्द्रसिंह । ( साश्चर्यम् । ) किम् ? रणवीर किमु ? वत्स ! कुतस्त्वमिदानीमत्र ?

रणवीर । ( सपरिहासम् । ) भ्रातर् भ्रातृजायामभिवादयितुमागतोऽस्म्यहम् । परं प्रजावत्या तु न किमप्यालप्यते ? ।

कुमुदिनी । प्राणनाथ ? इहास्माकमेकान्तस्थलमागतः कोऽयं वीरबालो विचित्रवेषेणामुना ?

रणवीर । ( मध्य एव ) भ्रातृजाये ? ननु देवरोऽस्मि ते । अभिज्ञातो न वाहं किमधुना ?

ईदृशि परिहासमधुराणि वचांसि निशम्य विस्मयाम्बुधिमग्ना कुमुदिनी ' कोऽयं बालो भवेद् ? ' इति विचारसागरे निलीना । तस्यास्तादृशीं दशां निरीक्ष्य चन्द्रः प्रावोचत्— " कुमुदिनि ? यदर्थमहमरण्यादरण्यं भ्रान्तवान् स एवायं मम प्राणप्रियः कनिष्ठबन्धू रणवीरः । ' इति । तत् कुमुदिनी प्रमुदा रणवीरं स्वाम्यर्णमाकारितवती । प्रणनाम भ्रातृजायां रणवीरः । अथ चन्द्रं पृष्टवती कुमुदिनी— ' नाथ ! कुतोऽयमुपलब्धो रणवीरसिंह ' इति ।

स्वप्रियायाः प्रश्नं निशम्य चन्द्रः ' कथमयं गुप्तगृहादानीतः, स्वयञ्च कथं तत्र गुप्तगृहे प्रविष्टवानिति ' सर्वमादित इमां सविस्तरं वृत्तमश्रावयत् । सकलमिदमुदन्तजातमुपश्रुत्य कुमुदिन्या नेत्रे हर्षाश्रुजलबिन्दुपवित्रे अभूताम् । समयेऽस्मिन्नेका चेटी भोजनार्थं परिवेशितं पक्वान्नपूर्णं सौवर्णं पात्रमग्रमानीयोपस्थितवती । अथ यथारुचि त्रयोऽपि ते सम्यग् बुभुजिरे ।

अनन्तरं रणवीरस्तु— ' शूरसिंहस्य सविधे किङ्करत्वेन निवसामि ' इति ज्येष्ठभ्रातरं निवेद्य शूराद्यमाप्तिस्वप्नेण भ्राम्यामित्याख्याय प्रणम्य च निर्जगाम । निर्गते रणवीरे कुमुदिनीचन्द्रौ प्रेमबहुलं वार्तालापं वितेनतुः । आलपतोरेव तयोः कुमुदिनी निद्रापरवशा संवृत्ता । किन्तु

१ उपायनमुपहारः । २ कथयित्वा । ३ नमदन्तरचितमण्डनं । ४ आगमत् । ५ भ्रातृजायया ।

चन्द्रो नितान्तमनागतनिद्रत्वादुत्थाय वासांसि परिधाय मुहूर्तं बहिः पर्यटितुं विचिन्त्य नीचैरवतीर्य शनैर्द्वारमपावृत्य बहिर्निर्ययौ।

निशीथसमयोऽयमासीच्छिशिरयामिन्याः। सर्वतो गाढं संतमसम्। न द्रष्टुं पार्यते किमपि जनेन। ईदृशे समये प्रासादादनतिदूरे एवेतस्ततो विचचार चन्द्रसिंहः। विचरन्नेवायं स्पष्टतः कस्यचित्पादक्षेपध्वनिमिवाश्रौषीत्। अतोऽयं किञ्चिद् स्तब्धः। प्रशान्ततया शर्वर्यां ध्वनिरेष सम्प्रति स्फुटमश्रूयत। ततोऽधिकं [1]सन्दिहानोऽयं निकटवर्तिनो विशालवृक्षस्य पश्चात्स्थित्वा समन्ततो निपुणं निरैक्षिष्ट। क्षणानन्तरमेव मनाग् दूरतः काचन कृष्णाकृतिः शनैर्निःशब्दपादक्षेपं प्रयातीति विज्ञातममुना। आकृतिरियं नीलवसनप्रावृता परितो दृशं निपातयन्ती मन्दमन्दं गच्छति स्म। अकस्मादीदृशीमाकृतिमालोक्य चन्द्रसिंहो मनसि— 'केयमाकृतिः? किमस्याः प्रयोजनं भवेत्? एतु, अहमपि तां सानुसन्धानमनुसरामि।' इति विचार्य स्वकटितटावलम्बितं परीक्ष्य चन्द्रहासं सावधानः सभयं तामाकृतिमनुससार। आकृतिरेषा शनैः शनैर्नगरविशिखा विलङ्घ्य प्रासादसमीपमुपगम्य क्षणं स्थित्वा समन्तादालोकयत्। अत्रान्तरे प्रासादरक्षकप्रहरी पर्यटंस्तत्रोपागतः। प्रहरिणं वीक्ष्य आकृतिरियं स्वस्थानादपसृत्य विटपिप्रकाण्डान्तरिता स्थिता। प्रयाते प्रहरिणि पुनरियं बहिर्निर्गम्य मन्दं संकेतस्वनमकार्षीत्। संकेतशब्दसमकालमेव तादृश एव नीलवसनवेष्टिता द्वित्रा आकृतयस्तदुपकण्ठमाजग्मुः। ताभिर्मन्दस्वरेण मिथः समालपितमित्थम्—

प्रथमाकृतिः। नायकसिंह?

द्वितीयाकृतिः। कोऽयम्? सेनापतिः क्रूरसिंहः किमु श्रीमान्?

इति वचो निशम्य साश्चर्यचकितश्चन्द्रसिंहः प्रच्छन्नं दत्तकर्णोऽतिष्ठत्। येयं प्रथमा आकृतिः सा क्रूरसिंहस्य, या चेयमपरा सा तदनुचरस्य नायकसिंहस्येति विज्ञेयं श्रीमता पाठकनिकरेण।

क्रूरसिंहः। किं नायकसिंह? अपि निष्पन्नं कार्यम्?

नायकसिंहः। चमूपते! बहूनि शस्त्राणि प्राप्तान्यस्माभिः किन्तु विजयसिंहस्य राज्यमिदमतीव दुर्गमम्। पश्यतु भवान्। आगच्छद्भिरिहास्माभिः कियत्कष्टमन्वभावि? इदानीमस्मन्मनीषितं सिद्ध्येच्चेन्महाननुग्रहो भगवतः।

क्रूरः। धीर! कथमेवमधीरोचितं भाषसे? यद्येवायं निश्चिनुते क्रूरसिंहः, समर्थोऽस्त्ययं तत्साधयितुम्? शृणु—कार्यद्वयमिह राज्ये करणीयमस्माभिः। प्रथमं तत्कर्त्तव्यं यदर्थमधुना वयमत्रागताः। अपरमिति प्रोच्य क्रूरसिंहः किमपि तदीयकर्णे प्रोवाच। तदनुश्रुत्यायं नायकसिंहः क्रूरसिंहाभिमुखं चक्षुषी विस्तार्य विलोकितवान्।

क्रूरः। किमर्थमेवमुद्विग्नोऽसि? तत्कार्यमपि साधयितुं पारयिष्यामो वयम्। सन्नद्धो भव तदधुना। होरात्रयमेवावशिष्टमधुना रजन्याः केवलम्। तदन्तराले सम्पादनीयमस्मा-

---

१ संशयानः। २ 'रथ्या प्रतोली विशिखा' इत्यमरः।

भिरात्मकर्येम् । शृणु यथैव त्वं प्रासादे प्रविश्य निहत्य शनैः सङ्केतस्वनं विधास्यसि, तथैवाहं चन्द्रवतीपरिसरगतैः स्वानुचरैः सार्कं निलीनौ वेजस्विसिंहारणसिंहौ सङ्केतयिष्यामीति तेऽपि द्रुतमिहागमिष्यन्ति ।

इयत्कालं योऽत्र चन्द्रसिंहः प्रच्छन्नः सकलं वृत्तं शृणोति स्म, सोऽकस्माच्चमत्कृत्य मनसि समवादीत्– ' किं चन्द्रवतीपरिसरगर्तभूमिषु प्रत्यर्थिनोऽन्तर्हिताः सन्ति ? किममी महाराजं व्यापादयितुमागताः सन्ति ? भवतु ? हन्त ? दिष्ट्याऽहं बहिर्निर्गतोऽधुना । क्रूरहतक ! परिपूर्णोऽधुना तव पापकुम्भः । मृत्युरपि ते सन्निहित एव ! दुरात्मन् ? यावदयं चन्द्रो जीवति न तावत्कदापि तव कार्यं फलिष्यति । सम्प्रति कथं साधयसीति ' पश्याम्यहम् ? इति निगद्य तूष्णीमास्त ।

अत्रान्तरे नायकसिंहः स्वमञ्चिकात्[1] 'गोधेय' वहिनिःसार्य तदीयलाङ्गूले प्रलम्बरज्जु निबध्य तं प्रासादकुड्ययोपरि प्राक्षिपत् । प्रक्षिप्तमात्र एवासौ दृढं भित्तौ लग्न । अपरौ च द्वौ पुरुषौ तद्रज्जुमारुह्य कराभ्यां धृत्वा तत्र निरुगौ । अथोपरि समारोढुं सन्नद्धो नायकसिंहः । इत्थं स्वकर्मणि व्यापृतानमूनवलोक्य झटिति चन्द्रसिंहः प्रासादद्वारसमीपं जगाम । तत्र नग्नकृपाणपाणिर्द्वारमाश्रित्य श्रीप्रतापसिंहः प्रहरिताकार्यं कुरुते स्म । तमालोक्य शनैः सङ्केतध्वनिमकरोत् चन्द्रसिंहः । चमत्कृत्य प्रतापसिंहः सुसज्जित समवाविष्ठत । ' कस्यायं सङ्केतध्वनिः ? ' इति निशाम्य यतोऽयं ध्वनिराचालस्तत एव चचाल । तत्र प्रयातमेवामुम्– ' आर्यप्रतापसिंह ? ' इत्याकारयच्चन्द्र ।

स्वनाम निशम्यैव साश्चर्यमना व्यमृशत्प्रतापसिंहः ' अये ? कोऽयं स्मादृशो निशीथे मदीयनामविज्ञाता ? मित्रं शत्रुर्वासौ भवेत् ? ' इति । अलक्षितगतिरेव सत्वरं प्रतापसिंहः चन्द्रसिंहसमीपमुपासदत् । तत्क्षणमेवासौ चन्द्रं परिचित्य समवादीत्– ' कोऽयम् ? राजकुमार ? कुतो भवानिदानीमिहेति ? '

चन्द्रसिंहः । ( तमिङ्गितेन मौनमाकल्पयितुं सूचयित्वा–तन्निकटमेत्य शनैस्तत्कर्णे । ) क्षमात्ययवर्यं ? भवङ्करमेकमत्र निर्मितं कृत्यमत्र शत्रुणा ।

प्रतापसिंहः । किं किं किमस्ति खलु ? सत्वरं निवेद्यताम् ।

चन्द्रसिंहः । दुष्टः क्रूरसिंहोऽत्रागतोऽस्ति । तदन्तिके साम्प्रतमत्र द्वौ पुरुषौ स्त । नास्त्ययसरः सम्प्रति भूयस्ताऽऽलपितुम् । अधुनैव भवान् निजान् शतं घोरान् सह नीत्वा दुर्गद्वारमुपगम्य तिष्ठतु । नितः परतो बहिर्गन्तुमभ्यन्तरं वा प्रविशन् कोऽपि नरो भवता । चन्द्रवतीपरिसरगर्तस्थलेषु प्रतिद्वन्द्विनां सैन्यं प्रच्छन्नं तिष्ठति । ये एते त्रयोऽत्र सन्ति पुरुषास्तेऽनु स्पर्शं क्रूरसिंहोऽपि वर्तते । १. सश्रीति मे. महाराजं. व्यापादयितुमागताः. सन्ति. १. यातु यातु भवान् सपदि । अभ्यन्तरात्कश्चित्कदापि पलायमानो यदि बहिर्गन्छेत्तं यथासम्भवं जीवन्तमेव निगृह्णातु, अन्यथा व्यापादयतु भवानमुम् ।

---

१ मञ्चिकात् । २ पुच्छे ।

इत्थं चन्द्रसिंहभाषितमाकर्ण्य प्रतापसिंहः सज्जीभूतः। तस्य धमनीषु कवोष्णशोणितं प्रावहत्। प्रस्फुरितमिव वीरतया सकलमस्य वपुः। तत्क्षणमेव राजकुमारमापृच्छ्य गत्वा स्वान् शतं वीरवरान् सह नीत्वाऽयं दुर्गद्वारमुपगम्य सुसज्जितः समवतस्थे। त एव–इमे वीरभटा अभूवन्, यानयमजितदुर्गनगरादिहानीतवान्। प्रयाते प्रथमयामे सच एव चन्द्रसिंहः प्रासादद्वारसमीपमाजगाम। 'कोऽयमिति' प्रहरिणा पृष्टोऽयं तन्निकटमागत्य–'एषोऽहमस्मि। रघुसिंह!' इत्युदचारीत्। सोऽपि चन्द्रसिंहमभिज्ञायोपसृत्य सादरं नत्वा—'महाराज! किन्नु कारणमकस्मादिहागन्तुमत्रभवतां निशीथे? आदिश्यतामयमनुचरः।' इत्यप्राक्षीत्।

चन्द्रसिंहः। रघुसिंह! सावधानो भव।

रघुसिंहः। आम्। कथं प्रभो?।

चन्द्रसिंहः। अहं प्रासादाभ्यन्तरं गच्छामि। त्वया द्वारसमीपे स्थित्वा निवारणीयः कोऽपि प्रविशन्नभ्यन्तरे। अप्रमत्तं त्वया!।

रघुसिंहः। आम्। विज्ञातम्। परं किं नु जायते वृत्तमिति निवेद्यतां प्रभुणा।

चन्द्रसिंहस्तु–'अमूल्योऽयं समयो नितरामिदानीम्। साम्प्रतमेकमतिभयानकं वार्तिन्य-मार्गं वृत्तमिति सज्जीभूयाप्रमत्तमवस्थेयम्।' इत्युदीर्य त्वरया प्रासादं प्रविश्य निःशब्द-पादक्षेपं कतिपयमण्डपान् समुल्लङ्घ्य चन्द्रशालां प्राप। समयेऽस्मिन्महाराजश्रीविजयसिंहः सुन्दरपर्यङ्के तूलिकायां गाढमशयिष्ट। पर्यङ्कान्तरे श्रीमती राजमहिषी प्रभावती निद्राणाऽभूत्। मध्येऽमन्दालोकः प्रदीप एकः प्रदीप्यते स्म। दीपं मन्दप्रकाशं विधाय स्वयमेकस्मिन् कोणे विरलबहुपाहरणमहावासनाभिः समवातिष्ठत चन्द्रः। अथ क्षणानन्तरमेव मन्दध्वनिरजायत। सच एव चन्द्रशालायाः पृष्ठदेशवर्ति वातायनमपावृतम्। गवाक्षवर्त्मना चन्द्रशालां प्राविशत् नायकसिंहः। यमवलोक्य सुमञ्चं समतिष्ठत चन्द्रः। स्वकटितटादसिधेनुकां निःसार्य महाराजमभिमुखमभिद्रुत्य नायकसिंहो यावन्महाराजं निहन्तुं प्रवर्तते तावदेव कुपितं मृगेन्द्र इव स्वस्थानादुत्प्लुत्य नायकसिंहं साहसचरवारेण चन्द्रः। केवलमेकेनैव प्रहारेण पामरस्य तस्य मस्तकं कलेवरात्पृथग्भूत्वापतत्। प्रावर्तत ततो रुधिरधारा। कबन्धं कम्पनाक्रान्तं शान्तमजनि। क्षणादेवास्य दुरात्मनः प्राणा अपसृताः। अमात्यो धवन्तिसिंहोऽपरे स्वामिनस्साहाय्यार्थमुपरि समारुह्य उपागतवान्। तमपि निगृह्य चन्द्रसिंहो व्याहार्षीत्–'नराधम! त्यजेदानीं जीविताशाम्। न सोढुमर्हं तव भारं वसुन्धरा' इति व्याहृत्य खड्गेन तं प्राहरत्। 'हा हतोऽस्मि' इत्युच्चैराक्रुश्य महीतले निपत्य क्षणेनैव पञ्चत्वमयासीत्। तदीयनादेन समुत्थाय श्रीमती राजमहिषी महाराजश्चोभौ प्रबुद्ध-सम्मुखनिपतितं शवयुगलं विलोक्य भृशमाश्चर्यचकितौ समभूताम्। 'किमिदं वृत्तं संवृत्तमि'ति विचिन्तयाञ्चक्रतुरुभौ। तस्मिन्नेवान्तरे चन्द्रः सम्मुखमागत्य महाराजमभिवन्द्य–

१ नष्टुं। २ घोरं वृत्तम्। ३ नीरवपदः। ४ दुरीक्ष्य। ५ मस्तकच्छेदहीनं वपुः।

'महाराज ! महाननिनयोऽद्य जातः । विवशेनैव मयेदं कृतमिति क्षन्तव्योऽहम्' इति जगाद ।

विजयसिंहः । चन्द्रसिंह ! मदीयतनयनिर्विशेषस्त्वमिति नास्त्येवात्र ते निरोधः । परं कथय कथमिदमखिलं वृत्तं संवृत्तमिति ? ।

चन्द्रः । भगवन् ! प्रचण्डवैरी क्रूरसिंहोऽयमपसृतवानिति सुतरां दुःखितोऽस्म्यहम् ( इति निगद्य सकलं वृत्तान्तं न्यवीविदन्नरेन्द्राय चन्द्रः । )

क्रूरसिंहस्य कपटवृत्तान्तममुमाकर्ण्य भृशं कुपितवान् महाराजः । स्वप्राणत्राणरक्षदयमिति नितरां प्रशशंस चन्द्रं नरेन्द्रः ।

अधुनाऽधोवर्तिना क्रूरसिंहेन किमकारीति पश्यामो वयम् । तेजस्विसिंहस्य चीत्काररवमुपश्रुत्य 'परिणतं वृत्तम्' इति सम्प्रधार्य ततो दुर्गद्वाराभिमुखं पलायत क्रूरः । यथैवायं दुर्गद्वारं प्राप्तस्तथैव प्रहरिणा निरुद्ध इति सद्य एवासौ ततो निवृत्य दुर्गप्राकारभित्तिमारुह्य बहिः सोत्फालमपसृतः ।

संजातप्रायोऽयं प्रातःसमयः । विलीनमुडुमण्डलम् । तनूभूतं तमः । अरुणाम्बरशालिनी विराजते पुरन्दरदिगङ्गना । विहङ्गमकलकलमुखरं विपिनतरुकुलम् । कुसुमसौरभसुरभिः संसरति सन्ध्यासमयसमीरः । नाधुनापि भगवानम्बरमणिरुदयाचलशिखरमौलिमण्डनभावमङ्गीकुरुते । ईदृशे समये वीरवरो मन्त्रिवर्यः प्रतापसिंहः प्रासादस्थितं महाराजमुपगम्य कृताञ्जलिरभाषत- 'राजेन्द्र ! चन्द्रसिंहकथनानुसारमहं नैजान् शतं वीरान् सह नीत्वा दुर्गद्वारि स्थितोऽभवम् । तदनु होराद्वयानन्तरमस्मदभिमुखं समुच्छ्रित एको धावमानो जनो दृष्टः । तत्क्षणमेवाहम्- 'क्रूरसिंह एवायम्' इत्यभिज्ञाय तं निग्रहीतुं वीरानादिष्टवान् । परं वीरैर्निग्रहणात्पूर्वमेवायं दुरात्मा दुर्गप्राचीरकुड्यं समुल्लङ्घ्य पलायाञ्चक्रे । अथाहं सैनिकैः साकं दुर्गाद् बहिर्निष्क्रम्य चन्द्रवतीतटगतभुवि निलीनान् सपत्नानन्वेष्टुमगमम् । परमस्मत्संज्वालितानां स्थूलवर्तिकादीपकानां विद्योतैर्नाशङ्किता विद्विषिण-इति झटिति पुरस्तादुत्तलभुवि स्थापितानां तुरङ्गमाणामन्तिकं पलाय्य यानारुह्यापसृतवन्तः । क्रोशयुगं यावदनुद्रुता वयं किन्तु पदातिसैन्यमस्माकं यानधारोहानधिगन्तुं न शशाक । तथाप्यस्मद्वीरैः त्वरितमनुपत्य पञ्चविंशतिः शत्रूणां व्यापादिताः । अवशिष्टा विद्रुताः । निहतानां वैरिभटानां तुरङ्गानादाय श्रीमदन्तिकमुपेयिवानहम्' इति ।

प्रधानचरनिगदितां वार्तामुपश्रुत्य सुतरां संतुष्टान्तरङ्गो महाराजो निजाङ्गुलितो हीरकखचितमङ्गुलीयकं निःसार्य पारितोषिकरूपेण तस्मै वितीर्य तं विससर्ज । अनन्तरमुपास्थितेयं 'सन्ध्यादेवी' इत्यवधार्य नरेन्द्रो नित्यनियमसम्पादनाय प्रास्थित । शूरः प्रतापसिंहोऽपि स्वनिकेतनं ययौ । वीरवरप्रतापसिंहस्तु कियत्कालपूर्वमेव महाराजनिदेशमुपलभ्य स्वशयनम-

---

१ तारकावृन्दम् । २ शची । ३ सौरभं सुगन्धः । ४ शिरोभूषणनाम् । ५ 'मशाल' इति प्रसिद्धा । ६ प्रच्छन्नेन । ७ पत्ति 'पैदल' इति भाषा ।

न्दिरं प्राप्य तत्र दृष्टवान्— ' मत्कुमुदिनी किञ्चित्समयपूर्वमेव प्रबुद्धा— ' क्व प्रस्थितो भवेदि-दानीं हृदयेश्वरः?' इति विचाराम्बुधिनक्रैरान्दोलितान्तरङ्गाजायत ' इति। विचारकल्लोलैरान्दोलितां दयितामालोक्य तदुपकण्ठमुपगम्य स्थितवांश्चन्द्रसिंहः। चन्द्रमवलोक्य मुदामानन्द-सान्द्रहृदया कुमुदिनी— ' कुत्रेदानीं गतोऽभवदार्यपुत्रः ? ' इति पृष्टवती। दयिताया मधुर-प्रियं वचो निशम्य चन्द्रः प्रसन्नमनाः सकलमपि रात्रिचरित्रं पवित्रहृदयामर्धाङ्गिनीमश्रावयत्। स्वमार्गेश्वरेण निजशिरोः प्राणा रक्षिता इति श्रुत्वा कुमुदिनी चन्द्रस्य बहूपकारं मेने। अस्तिन्नां रात्रिं प्रबुद्धोऽयमिति भार्तानियममवमान्य सुष्वाप चन्द्रः। कुमुदिनी चेयं पित्रोरुपकण्ठं गतवती।

कालोऽयं कलितकदम्बामोदामन्दोलानां सलीलानां प्रकटितवनयनौघनाडम्बराम्बराणां कृता-खिलहर्षवर्षाणां वर्षाणाम्। अस्मिन् चापराह्णसमयः। परमद्य मार्तण्डमण्डलं न तथाप्यावृतं मेघमालया। अभिनवपुरन्दरगोपैर्मण्डिता हरिततृणकन्दलमयी केदारभूमुन्धरेयं दिनेन्द्रकिरणप्रभावल्लीभिः किमपि रमणीयत्वं कलयति। मन्दारदामकान्तिं कलयन्ती प्रावीलोलाम्बुदावलीमधोऽधःपतन्ती चारुबलाकश्रेणी मधुरकलरवं कुर्वाणा प्रेक्षकाणां मनो नन्दयति। केदारभुवि स्वकार्यतत्पराणां क्षेत्ररक्षकाणां मण्डली सानन्दं गायति ग्राम्यगीति-कावलीम्। क्वचिदिन्द्रगोपविचित्रितायां नूतनशाद्वललसितायां सचिरोपवनभुव्यरण्यां जलद-स्तनितानाममन्दमन्दमञ्जुलं नादमाकर्ण्य चन्द्रकिकदम्बकं प्रफुल्लकेकारवं कुर्वन् निजचारुकला-[11]पवृन्दं प्रसार्य सानन्दं नृत्यति। भगवान् दिवाकरः कदाचिज्जलदस्य[12] वनिकान्तरे निलीयमानं कदाचिदाविर्भावयन्नालोचकानां विलासं जनयतितराम्। हरिततृणाननपी-[13]वरतनुरां गवेन्द्रगोवृन्दचैत्रोरदैमाहेयादिपशूनां सन्दोहो दर्भाङ्कुरान् कवलयन् सहर्ष-मरण्यानीस्थलीषु विचरति।

इतो हर्षमये समये महाराजश्रीविजयसिंहो मृगयाव्याजेन बाह्यकाननभूमिशोभामव-लोकयितुमभिलषितवानिति—आगमनाय समं चन्द्रसिंहं नेतुमाकारयामास सिंहेन। मुहूर्ता-न्तरमेव मृगयावेषधारी तुरङ्गं कुरङ्गमिव नर्तयन् प्रासादप्राङ्गणभुवि समुपस्थिते चन्द्रसिंहः। चन्द्रसिंहं सन्नद्धमवलोक्य महाराजोऽपि सज्जीभूय निजराजानेयमारूढवान्। दूतमग्रिय-मेण स्वकं सैन्यं सह नेतुं न्यवेदि किन्तु न्यषेधि नरेन्द्रेण सह नेतुम्।

विजयनगराद् बहिर्निर्गत्य व्याघ्रारोहावपि [15]सगुरूच्छ्रायाविति यथाचितौ निजसैन्यचौ[16]। अथाकस्मात् प्रादुर्भूता पुरस्तात् सद्गद्गदानादं कुर्वाणा [17]वात्या; यया सार्कं महाराजस्य प्रकृ-तिं वाममनम्। इदमममङ्गलसूचकं चिह्नमवलोक्य महाराजश्रीविजयसिंहश्चन्द्रसिंहम-

१ अर्जुनवनाग्रः। २ पवनसरलः सान्द्रपैः। ३ मूर्धाचिन्दनम्। ४ इन्द्रवीरः। ५ चन्द्रलोऽ-हुरः। ६ वेतमुनिः। ७ कन्दरपुष्पमाला। ८ मन्द्रो गम्भीरः। ९ चन्द्रकी मयूरः। १० केका वाणी मयूरस्य। ११ बर्हिसमूह-। १२ तिरस्करिणी। १३ पीवरः मांसलः। १४ वलीवर्दो वृषभः। १५ चतुर्विधसाधनम्। १६ सैन्यते ऽश्वः। १७ वातुवनम्।

वदत्–' राजकुमार ! किमेवमद्य भवतीति ? '

चन्द्रसिंहः । ( स्वानुमतिं प्रकटयन् । ) राजेन्द्र ! अङ्गीक्रियते चेन्मम वचनं न गम्यतामद्य मृगयार्थं श्रीमता । किमप्यमङ्गलं वृत्तं भवितेत्याशङ्कते मम हृदयम् । यतो महानुभवैरिहत्यकैः क्रूरसिंहः स्वकरपञ्जराक्षि-सूतवानस्ति । श्रुतं किल मया–' एषोऽस्मिन्नेव भयानके महारण्ये नित्रसतीति । तदितोऽपि निवर्तनं श्रेयस्करम् । परतः प्रभु प्रमाणम् ।

विजयसिंहः । ( स्वनिश्चयं दर्शयन् । ) वीरराजन्यकुमार ! तव वदनारविन्दादीदृशि वचांसि निशम्य सुतरां विस्मितोऽस्मि । न शोभते वचनमीदृशं भवन्मुखात् । बहिर्निर्गतो वीरराजन्यः कदापि सपत्नभिया निवर्तेत किमु ? चन्द्रसिंह ? भवतु यद् भाव्यम् ! किन्तु नैव निवृत्येत खलु मया ! तद् गन्तव्यमरण्ये ।

अथाश्वौ कशाघातेन ताडितौ वाजिनौ वायुजवेन विद्रुतौ होरानन्तरमेव महतो गिरीन्द्रस्य परिसरारण्यस्थलमुपसेदिवांसौ । आसेदुषी संप्रति सायंसन्ध्यावेला । अस्ताचलं जिगमिषुर्भुवनभास्करोऽकस्मादरुणजलधरपटलाभ्यन्तरे निलीनः । रुचिरारुणाम्बुधरपटलमयाम्बरमावसाना तिलकमिव रविबिम्बं भालिके दधाना लालितललनेव वरुणदिगङ्गना काचिद् विचित्ररुचिरां रुचिमाविर्भावयन्ती विलसतितराम् ।

इमौ तुरङ्गारोही तत्र स्थित्वा दिशोदिशमालोकितवन्तौ किन्तु न दृष्टं किमपि सत्त्वं ताभ्याम् । अत्रान्तरे विलोकितो महाराजस्य मनागग्रतः स्थितेन चन्द्रसिंहेन गिरीन्द्रकन्दरान्तरे निद्राणो मृगेन्द्रः । तत्क्षणमेवायमिमं कण्ठीरवं महाराजं दर्शितवान् । अथोभावपि गिरिगुहाभ्यर्णमुपगम्य किञ्चिद्दूरं स्थित्वा भुशुण्डीनिर्ह्रादमकुरुताम् । भुशुण्डीस्वनश्रवणसमकालमेव केसरी सहसा चमत्कृत्य किञ्चिद्दुःखालस्यं निरस्य समुत्थाय भयङ्करगर्जनया समं बहिरभ्यागमत् । वनराजस्य भयानकगर्जनया सर्वेऽप्यरण्यवासिनो जन्तवो व्याकुलीभूयेतस्ततः कान्दिशीका दिशो भेजिरे । एतस्मिन्नन्तरे महाराजविजयसिंहः पुनर्द्वितीयं भुशुण्डीस्वनमकार्षीत् । अतोऽयं मृगेन्द्रः संकुप्य सहसा दूरमुत्फाल्य नरेन्द्रस्योपरि पर्यपतत् । एत-त्तत्कालमेव चन्द्रसिंहेन सिंहस्योपरि विसृष्टा सीसकगोलिका । परं मात्रयाऽसौ स्वल्पमपि केसरी । एष तु स्वप्रतिद्वन्द्विसम्मुखमेव ससाहसमभ्यपतत् । विजयसिंहो निजमाजानेयं वर्तुलं परिभ्रमयन् पञ्चास्याक्रमणं निष्फलं व्यधात् । हर्यक्षोऽपि घोरं गर्जन् वाजिनमनुबभ्राम मण्डलेन । तत आसादितावसरो नरेन्द्रो मृगेन्द्रमस्तकमभिलक्ष्य गोलिकां विससर्ज । भुशुण्डीनिर्गता गोलिका पुण्डरीकस्य भालस्थले तीक्ष्णं लग्नेति घोरं चीत्कृत्य मृगाधिराजो धरणीतले निपत्य व्यचेष्टत । सद्य एव चन्द्रहासेन तं निजघान चन्द्रसिंहः । मृगेन्द्रं मृतमालोक्यानितरामानन्द नरेन्द्रः । अथ विश्रमितुमेकं विशालतरुतलमासाद्य समुपविष्टावुभौ राजेन्द्रराजनन्दनौ ।

---

१ ललाटे । २ समन्ततः । ३ भवभयमर्दने । ४ ' सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ' ।

एतस्मिन्नन्तरे निकटवर्तिनिबिडनिकुञ्जाभ्यन्तराच्चिर्जगाम [1]कुरङ्ग एकः । निरीक्ष्यैवैनं हरिणं विजयसिंहचन्द्रसिंहौ शनैर्हयमारूढौ । लक्ष्यीकृत्यामुं मृगं भुशुण्डीनिःस्वनं चक्रतुः । दैवयोगेनापरा[2]द्धगोलिकौ संजाताविमौ । ततोऽयं वातायुर्वातवेगेन विद्रुतः । तत्क्षणमेवैतौ तुरङ्गारोहौ तं कुरङ्गमनुधावितवन्तौ निजतुरङ्गमौ । पलायितोऽयमजिनयोनिर्वायुरंहसा । तस्य धावतोर्मध्ये महदन्तरं समजायत । स्वहस्तादपसृतं हरिणं विलोक्यातिविवृद्धमन्युर्विजयसिंहः क्रुधेव वराकं वाजिनं कशया द्वित्रिः प्राहार्षीत् । तत्क्षणमेवायं चतुरस्तुरङ्गमः प्लुतगत्या पवनवेगेन पलायत । तत्पृष्ठतो राजकुमारोऽपि निजघोटकं त्वरयाऽधावयत् । किन्तु वाहोऽस्य विजयसिंहस्याश्वमेवमनुधावितुं नाशक्नोत् । महाराजस्य हयः पश्यत एवास्यातिदूरं गत्वा क्षणेनैव नयनपदवीमतीतः । चन्द्रसिंहस्य सैसिरिमं वायुवेगेनानुधावति स्म । अत्रान्तरे तत्रारण्ये भिन्नभिन्नदिगवलम्बिनौ द्वौ पन्थानौ तस्य दृष्टिपथमुपागतौ । ततोऽयं तुरङ्गरश्मिं समाकृष्यामुं स्थिरयित्वा व्यचिन्तयत्–'केन पथा गतो भवेन्महाराजः ? सम्मुखमियं घोरा रजनी । मुहूर्तानन्तरं तु मार्गोऽपि नावलोक्येत ! इतो विजयनगरमपि विप्रकृष्टतरं वर्तते । केन वर्त्मना गन्तव्यमधुना मया ? किंवृत्तान्तः खलु भवेन्महाराजः ?' इति ।

तत्र कोऽपि मानवोऽपि नावालोक्यत यमनुयुञ्जीतायम् । किमिदानीं कुर्यादयम् ? अत्रान्तरे ध्याननिमग्नोऽसौ पुरतः स्वाभिमुखमायान्तं कञ्चन जनमदर्शत् । अमुं दृष्ट्वाऽतीवहृष्टः सहर्षं मनसा–'अये ? ईदृशे भीषणेऽरण्ये कतमोऽसौ मनुष्यः कुत्र प्रयाति ?' इत्युक्त्वा तदभिमुखं विलुलोके । 'आगन्तुकोऽयं स्वाभिमुखमेवायाति' इति निर्धार्य चन्द्रसिंहो गम्भीराकारं तस्थौ । स एष पुरुषो राजकुमारस्य नेदीयान् संवृत्याभूतलं नत्वा विरचिताञ्जलिरिदमन्वपृच्छत्–'भवानेव किमु राजकुमारश्चन्द्रसिंहः ?' इति । अपरिचितजनमुखान्निजनामाभिधानं निशम्यैव विस्मितमना अवादीच्चन्द्रसिंहः–'आम्, अहमेव चन्द्रसिंहोऽस्मि । कस्त्वम् ? कुतो मां परिचिनोषि ? अहं तु त्वां नाभिजानामि' इति ।

आगन्तुकः । सत्यम् । भवान् मां कदापि नावलोकितवानिति कुतो मां परिचिनुयात् ? परमहन्तु सम्यगभिजानामि भवन्तम् । धीमन् ? परिश्रान्तोऽस्म्यहं तु भवन्तं विचिन्वन्नेव । महाराजश्रीविजयसिंहस्तु क्रियाकालपूर्वमेवास्मद्विश्रामस्थानमासाद्य विश्राम्यति । तेनैवाहमाज्ञप्तो भवतो नामरूपवर्णवयआदिलिङ्गानि समाख्याय भवन्तमन्वेष्टुम् । भाग्येनैवोपलब्धो भवानिति सुष्ठु जातम् ; अन्यथा न जाने कियद्दूरं पर्यभ्रमिष्यम् । [6]तदेतर्हि मामनुगच्छतु श्रीमान् ।

'आम्, पुरो भव ।' इत्यभिधाय चन्द्रसिंहस्तमनुचालयामास [7]निजगन्धर्वम् । विशालयोः शैलयोरन्तरा भूत्वा तौ घट्टतोऽमुत्तीर्य दरीवर्त्मना प्रचेलतुः । वाहोऽयमस्य श्रान्ततया क्वचिद्विषमशिलातलेषु प्रस्खलन् क्वचिच्चाहतचरणः पाषाणखण्डोद्घातेन पतति स्म । पर-

---

१ 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इति चामरः । २ भ्रष्टगोलिके । ३ वायुवेगेन । ४ घोटकः । ५ दूरतरम् । ६ सम्प्रति । ७ गन्धर्वो हयः ।

मधुनापि वसतिस्थानं कथं नागतमित्यवधार्यासौ तं पुरोगामिनं पुरुषमपृच्छत्- ' किं भो ! कियद्दूरमितोऽधुना तव निवासस्थलम् ? ' इति । एष तु – ' समीपमेवाद्य । पश्यतु भवान्। तद् दृश्यते मम वासस्थलम्। परं तदितो योजनकल्पं विप्रकृष्टं स्याद् ' इत्येकस्यां दिशि दर्शयन् कराग्रेण चन्द्रं मौनमेव प्रचचाल ।

तन्निर्दिष्टां दिशमनुपश्यतोऽपि चिरमस्य नागतं किमपि दृग्गोचरमिति चन्द्रसिंहस्तदुपरि समशयिष्ट। [illegible] तु मानवस्तूष्णीमेवाग्रतो गच्छति स्म। अथाऽकस्मान्नीलनिचोलाच्छादितशरीरं करकलितप्रज्वलितस्थूलवर्तिकादीपकजालं दशसंख्यामितं पुरुषाणां दलं सम्मुखमुपस्थितम्। तदवलोक्यैव चन्द्रमार्गदर्शको मनुष्यस्तेन सङ्गतो भूत्वा दलनायकस्य कर्णे किमपि मन्दमन्दमकथयत्। तदीयकथनमाकर्ण्य नायकोऽसौ राजकुमाराभिमुखमनिमेषचक्षुषा निरीक्ष्य निजभटान्-' निगृह्यतामयम् ' इत्याज्ञप्तवान्। तत्क्षणमेव चन्द्रं निग्रहीतुममी तदभिमुखमभ्यधावन्। किन्तु तत्पूर्वमेव तु चन्द्रसिंहस्य चन्द्रहासः स्वकोषाद्बहिः सृतोऽभूत्। इदानीमेव विज्ञातं च मया- ' वञ्चितोऽस्म्यहं छलेनेति ' । स्वचन्द्रहासं तदभिमुखं धृत्वा सक्ष्वेडमयमब्रवीत्- ' स्थीयताम् !! पदमेकमपि पुरो निधास्यथ चेत्सर्वेऽपि यूयं मम हस्तेन गृध्रजम्बुककाकानां भक्षणीया भविष्यथेति सत्यं जानीत। नाभिलषाम्यहं मुधा युष्माकं कवोष्णशोणितधाराप्रवाहैर्धरित्रीं मलिनयितुम्। के यूयम् ? कथञ्चैव मामाक्रामथ ? वदत सत्वरम् ' इति ।

' वयमपि भयङ्करा यमकिङ्कराः स्मः । सेनापतेः क्रूरसिंहस्य निदेशेन त्वां निग्रहीतुमेवागता वयम् ! ' इति ते प्रोचुः ।

चन्द्रसिंहः । तद् सज्जीभवत यूयम्। प्रतीक्षते वः पन्थानं यमराजः । आदौ युष्मान् अहं निहनिष्यामि, ततो युष्मत्सेनापतिं नृशंसं क्रूरसिंहमपि यमनगराध्वनीनं विधास्यामि। आगच्छत आगच्छत । ये प्रथमं जिगमिषन्ति करालयमदंष्ट्रान्तराले सम्मुखमागच्छन्तु ते। इति निगद्य ससिंहनादं चन्द्रसिंहः प्रत्यर्थिनः क्रुधा प्रहर्तुमुपाक्रमत । परिपन्थिनोऽपि प्रबला आसन्निति तैरपि खड्गमाकृष्य राजकुमारोपरि परिपतितम्। वीरवरो राजकुमारोऽयं परेषां स्मरणं विधाय धैर्येण सपत्नाभिमुखो बभूव । स्वचन्द्रहासं चालयन् परितः समापतत्प्रत्यर्थिनामाघातं तदुपरि परिगृह्य शौर्येण निजरक्षणमयं व्यधत्त । पश्यतामेव रिपूणां राजकुमारेण द्वौ पुरुषौ निहतौ । ततोऽन्ये भटा भृशं रुषित्वा युगपदभिमन्युमिव कौरवमहारथवीरा राजकुमारं घोरोत्पातं पर्यवारयन्। इमे राजकुमारतुरङ्गमं निहत्य तमपि भूतले समपातयन्। किन्तु झटिति समुत्थाय महासाहसेनायं रिपुमण्डलमध्यचारी करवालं दृढं परिगृह्य करपल्लवनातिकौशल्ययुतं युद्धवान्। दुर्दैवयोगेनाद्यापि तदङ्गेष्वेकोऽपि व्रणो नाजायत । परमधुना परिवर्तितः कालः। वीरचन्द्रस्य खड्गधारातीर्थेऽन्येऽपि पञ्च भटा निपतिताः । अवशिष्टाश्च पञ्चैदानीं भटाः । तेऽपि मरणादत्रस्यन्तो युद्ध्यन्तः । अथोपलभ्यावसरं चन्द्रसिंहो निजाम्बरेण स्वकटितटावलम्बिनीमनिषङ्गुकामादाय तथापकषद स्वक-

मच्छिनत् । छुरिकाप्रहारेणायं नायकः प्रभुचरणारविन्दशरणमविन्दत । ईदृशमतुलं तस्य विक्रममालोक्यावशिष्टौ भटौ रणाङ्गनमपास्यापसृतवन्तौ । अत्रान्तर एव तेषां नष्टज्वरसमानो लुण्ठकपरिवृतः क्रूरसिंहस्तत्र प्राप्तवान् । चन्द्रसिंहमवलोक्यासौ सहसा प्रोक्तवान् सदर्पम्– 'कोऽयम् ? ममासेटकः किमु ? चन्द्र ? ममासन्नेदानीं तव मरणवेला इति दृढमवेहि । यावदस्य वक्षो विदार्य न पिबामि रुधिरम्; न तावन्मे मनसि शान्तिर्भविष्यतीति ।'

चन्द्रसिंहः । रेरे निशाचरेन्द्र ? न शक्तोऽसि किमपि कर्तुं मे । मदीयमेकमपि शिरोरुहं वक्रयितुं नास्ति विक्रमस्त्वयि । मयाऽऽशंसितं तवायुरिति नियतमवेहि ।

इदं वचो निशम्यैव क्रूरः पार्श्वस्थायिनोऽनुचरस्य श्रवणे किञ्चिदावेद्याय तं क्वापि विसृष्टवान् । अथ चन्द्रसिंहनिकटमुपगत्य क्रुधा कथितवान्– 'त्वमेव चन्द्रसिंहो ननु ?' इति ।

चन्द्रसिंहः । आम् । ततः किमवधारयसि त्वम् ? ।

क्रूरसिंहः । ( शवान् दर्शयन् । ) केनामी ममानुचरा निहताः ? ।

चन्द्रः । योऽयं तवाग्रे तिष्ठति वीरवरस्तेनैव व्यापादिता इमे ।

क्रूरः । किमपि प्रयोजनमेवं कर्तुं ते ?

चन्द्रः । दुरात्मन् ! न लज्जसे प्रयोजनं पृच्छन् खलु त्वम् ? ।

क्रूरः । चन्द्र ? विमृश्य ब्रूहि खलु किमपि कटुवचनम् ।

चन्द्रः । किं करिष्यसि त्वमन्यथा ? ।

क्रूरः । किं करिष्यामि ? खण्डशो विधाय त्वां गृध्रशृगालेभ्यो वितरिष्यामि ! !

चन्द्रः । अहह ! त्वत्पूर्वमस्त्वहमेव त्वां तथा विडम्बयिष्यामि । पापिष्ठ ? क्षणेनैव त्वां संचूर्णयिष्यामि ।

क्रूरः । अलं प्रलप्य !! निवारय अल्पस्त्रीभारमरसनाम् ? कुत्सितवचनैर्मां तिरस्करोषि किमु ? सद्य एवास्वादयिष्यामि त्वामहं फलमस्य ।

चन्द्रस्तु– 'आः दुरात्मन् ? क्षत्रियाधम ? ततः पूर्वं तु ममेयं छुरिका तवोरःस्थलं विदार्य परपारं निःसरतु ।' इति कथयित्वा क्रूरमभिद्रुतवान् । द्वावपि परस्परमसिना प्रहर्तुमारेभाते । होरार्द्धपर्यन्तं तयोरासीद् युद्धम् । परं कोऽपि पृष्ठं न दर्शितवान् । अत्रान्तरे प्राप्तावसरश्चन्द्रः स्वचन्द्रहासेन तदुपरि प्रहारमेकं कृतवान् परं तत्प्रहारमसौ सद्य एव निष्कम्पकृपाणे निजे गृहीतवान् । चन्द्रसिंहचन्द्रहासप्रहारस्तत्कृपाणोपरि तथा लग्नो यथा क्रूरसिंहस्यैवासहीयस्खड्गोपरि तं प्रहारं पुनरेव तदास्य प्राणा उदक्रमिष्यन् । चन्द्रसिंहस्य खड्गाघातेन क्रूरस्य करात् विगलितः करवालः । स्वयमपि घातं परमोपकण्ठमाप्यादितवान् । रुधिरोर्मिनुमालोकिहानं विलोक्य तं झटिति विकरालकेसरीव समुत्पत्य चन्द्रसिंहः सद्य एवमुरःस्थलमारोहविश्य च तत्र निजकटिप्रान्तादसिपुत्रीं निःसार्य तस्य वक्षःसमीपे धृत्वा कथितवान्– 'ब्रूहि, राजद्रोहिन् ? कुक्कुर ? कया रीत्या विदारयेयं वक्षस्तवेदमुरस्थकम् ? पुनरप्यन्तः प्रवेशयेयमुत शनैः शनैः ?' इति ।

क्रूरः । ( गद्गदगिरा । ) क्षम्यताम् । राजकुमार ! भवतः क्षमां याचे ।

चन्द्रः । क्षमा ? कस्य ? त्वादृशो नराधमस्य ? नैव क्षन्तव्योऽसि । नरककृमयस्त्वरातुरतया पन्थानमवेक्षन्ते । गृध्रफेरुसारमेयादयोऽपि तव शवमपेक्षन्ते ।

क्रूरः । ( साश्रुनेत्रः । ) आम् । अर्होऽस्मि खलु सर्वस्यास्य । एनांसि मम सन्ति घोरतराणि । अहह ! किन्तु भवेदिदानीं मे ? राजकुमार ! सकृद् देहि मे प्राणभिक्षाम् । शरणं प्रपन्नोऽस्मि ते । कदाप्यहमितो नैवाचरिष्यामि दुरितम् । चन्द्र ! क्षम्यतामधुना भवता । शश्वदहं त्वां सेविष्ये । मा जहि माम् ।

इत्थं करुणगिरा कातरतरं मुखं विधाय नयनाभ्यामश्रूणि विमुञ्चन् क्रूरसिंहश्चन्द्रसिंहं प्रार्थितवान् । तस्याऽतिकरुणयानयाभ्यर्थनया चन्द्रस्य हृदयं दयार्द्रमजनि । क्रूरस्य वक्षसोऽवतीर्य तमसौ निगदितवान्– ' क्रूरसिंह ! गच्छ, मुञ्चामि त्वामधुना । अनुकम्पितोऽसि मया त्वम् । यद्यपि त्वयाऽतुलं दुःखमदायि तदपि तदखिलं विस्मृत्य तुभ्यमहं क्षमां प्रयच्छामि । इतः परं परमेश्वरं हृदि निधाय भूतेषु दयां विदध्या इत्येव त्वं विशिष्योपदिश्यसे मयेति । '

क्रूरः । ( साञ्जलिः । ) अत्यन्तमुपकृतोऽस्मि श्रीमता । आगच्छतु मया सह भवानिदानीम् । सन्निकृष्टमेवास्मन्निवासस्थानम् । अतिथिर्भवान् मे सम्प्रति । तन्मदीयवासगृहमभ्येत्य भोजनं विधाय सुखं शेताम् । प्रत्यूषे भवता सममागन्ताऽस्मि विजयनगरम् । महाराजोऽप्यचिरेण गतो भवेद् विजयनगरमिति तर्कयामि । तत्रागत्याहं महाराजचरणयोर्निपत्य क्षमां याचिष्ये कृपालुरेष नरेन्द्रो निश्चितमेव मां क्षमिष्यते । अहह ! भगिनीं कुमुदिनीमपि भृशं पीडितवानयं क्रूरः । तामपि प्रणिपत्य क्षमामर्थयिष्यामि । साप्यवश्यमेव निजौदार्येण मां क्षमिष्यत एव । तद्भ्रातः ! आयातु मया सममधुना भवान् ।

अथ क्रूरसिंहमनुगच्छंश्चन्द्रसिंहोऽवशिष्टौ च भटौ । मुहूर्तेनैतेन निवासस्थानमासेदुः । तत्रास्तां [illegible] पर्यङ्कौ । तदुपरि निषण्णाः सर्वे [illegible] । क्षणानन्तरं दासैर्वेगेन परिवेषितं सुन्दरपात्रे भोजनमानीय चन्द्रस्य पुरो निदधे । राजकुमारः क्रूरसिंहाभिमुखमालोकितवान् । क्रूरसिंहस्तु कृतभोजन इति भोक्तुं निषिद्धवान् । चन्द्रस्त्वतीव बुभुक्षित इति त्वरया भुक्त्वा हस्तमुखं प्रक्षाल्य शयनाय पर्यङ्कं भेजे । दिनमखिलं महापरिश्रमश्रान्तत्वात् तत्क्षणमेव निद्रादेव्याऽऽलिलिङ्गे । निद्रया घूर्णमानमेनमवलोक्य क्रूरसिंहः प्रमुदितवान् । विस्मृतवानयं च महान्तमुपकारम् । यानि पुरा तत्पुरतो दयाप्रार्थनवचांसि प्रादुरभवन्, तानि [illegible] विस्मृतवान् । धूर्तोऽसौ क्रूरसिंहोऽन्यतो विश्रामार्थं विधाय [illegible] तत्कालमेवाहूतवान् भटमेकमसौ । दैवात् स्थितोऽयं [illegible] कृताञ्जलि – ' किमादिश्यते श्रीमता ? ' इति सादरं पृष्टवान् । ' [illegible] ' इत्यादिष्टवान् क्रूरसिंहः ।

१ [illegible] । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] ।

' अतिसमीचीनम् ? प्रभो ? ' इति प्रोच्य तत्क्षणमेवासौ दृढायसशृङ्खलया निद्राणस्य चन्द्रसिंहस्य हस्तद्वयं नियन्त्रितवान् । अथ निश्चक्राम ततः क्रूरसिंहः । बन्दीकृतश्चन्द्रसिंहः । जालाभ्यन्तरे निपतितः केसरी । निष्कलङ्क चन्द्र ? योऽयं दयया परित्रातस्त्वया तेनैव तव दयाया दुरुपयोगं कृत्वा विप्रलब्धस्त्वम् ? अहह ? वीरचन्द्र ? अन्ततस्त्वं दययास्मानप्युपहारीकृतवानसि ? दैव ? विचित्रा ते गतिः ॥

॥ ॐ ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ प्रकृतिसौन्दर्यसोदर्ये कुमुदिनीचन्द्रे पञ्चमी कला ॥ ५ ॥

---

# अथ षष्ठी कला ।

" अतिमलिने कर्तव्ये भवति खलानामतीवनिपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ " ( स्फुटम् )

" पूर्णञ्च चन्द्रवलयं तमसा गृहीतं जातस्तथा कलङ्कः करिणा च भग्नः ।
नौकाऽम्बुधौ च भरिता भग्ना च दीर्णा हा हन्त ? दुर्विलसितं फलितं विधेस्तत् ॥
( पद्यतरङ्गिण्याम् । )

ॐ विराजते गिरिकन्दरावासमयी झिल्लीझङ्कारगम्भीरा भयङ्करी महारण्ये निशादेवी । ततोऽपि सजलाम्बुजालपूर्णनीलमहाम्बुवाहमालया परिवेष्टितं सकलमम्बरतलमिति किमिव वर्णनीया भयङ्करता विभावर्याः । दिगन्तरेषु काष्ठैर्मिथःसङ्घर्षसंजनिता सौवर्णवर्णवर्णनीयकान्तिरमणीयाऽपि धूर्जटिरसनामालेवातिभयानकाऽतिविलासवती शोणितशोणा चञ्चलावली चमत्कुरुतेतराम् । अतिदूरतः कन्दरीकन्दरेषु मृगेन्द्राणां घोरगर्जितमाकर्ण्यते । तेषां घनेन्द्रगर्जनाभ्यन्तरे गजेन्द्राकारविडम्बिनां महाम्बुधरवृन्दानां भयङ्करसान्द्रं मन्द्रस्तनितजालमपि निलीयते ।

ईदृशे महाभयानकमये समये महाघोरेऽस्मिन्महारण्ये निर्भयान्तःकरणप्रवरः समागच्छेन्नूनमेव भयाकुलहृदयो भूत्वा स एव यमभागनुयात् । ईदृश्यां महाघोरतमिस्रायां महारण्येऽस्मिन् गन्धर्वारूढः कश्चन पान्थो विद्युत्प्रकाशमात्रविनिर्देशेन प्रदर्शितः । पथिकोऽपनीतपरान्तरनुवर्त्मोत्पथे । यथैव पश्चाद्वर्षमिव तुषारो दृश्यते । आसीदेव मृगचारेन्धारी । निम्नोन्नतधरामार्गोऽपि महारण्ये । अभीष्टस्थलमयं स्वचक्षुर्निमिषति चतुर्दिक्षु परं न लक्ष्यते पन्थाः । पदे पदे मार्गगतशिलाखण्डेषु प्रहरणैर्वेगातस्य तुरगः पश्यन्निव सतर्क्यस्मीरमवनींस्पृशन् ।

---

१ उद्यमनम् । २ गिरि—दरी । ' दाऽदरुणा दरति निराऽदरम् ' । ३ पूर्णा । ४ वेष्टितम् । ५ मेघमाला । ६ वर्णनीया । ७ विद्युन्माला । ८ गम्भीरगर्जितम् । ९ चारुतरम् । १० मद्गुधिवरः ।

पथिकस्यास्य मुक्तावलीवृन्देनेव घर्मजलबिन्दुजालकेनाछन्नमिव मुखमण्डलम् । सैन्धवोऽप्यस्य स्वेदाम्बुजालललिततनुरालोक्यते ।

अश्वारोहिणाऽमुना शैवलिनीकूलकुञ्जे रजनीमखिलामतिवाहयितुं निश्चिक्ये । पुनरयं परितः सकृद् दृक्पातमकृत । उपागतममुष्य दृग्गोचरमनतिदूरे किञ्चन प्रकाशजालमिव । ततोऽसौ तटिनीतटे वसतिमकुर्वाणः प्रकाशाभिमुखमुपगम्य निरस्तुं निश्चिकाय । अथ गन्धर्वमाद्य प्रकाशान्तिकमुपेत्य— ' कुटीरस्याग्रतो रिक्तभूतले द्वादशसंख्याकाः पुरुषा ज्वलनं प्रज्वाल्य साम्रकधूमपानं कुर्वाणा मध्ये मध्ये कथागोष्ठीसुखमुपभुञ्जाना निषण्णाः सन्तीति ' दृष्टवानयम् । अश्वारोहोऽयं तान् पुरुषानवलोक्य परममाह्लादितवान् । तदन्तिकमुपगम्य तुरङ्गादवतीर्य स्थितवान् ।

अकस्मादीदृशे भयानककानने नक्तमिममश्वारोहिणमात्मनिकटमुपस्थितमवलोक्य ततोपविष्टाः पुरुषा आश्चर्यचकिताः सन्तस्तदभिमुखमालोकितवन्तः । सिंहसंहननं विशालललाटमण्डितवदनारविन्दं वृषस्कन्धं व्यूढोरस्कमाजानुबाहुममुमालोक्यामी मानवास्तु विस्मिता इव जडीकृता इव च स्तब्धा स्थिता एकमप्यक्षरं भाषितुमुत्सहन्ते वक्तुम् । केवलामिमे तुरगारोहममुमनिमेषनयनैर्निरीक्षाञ्चक्रिरे ।

तानित्थमस्फुरितवाग्विलासान् निस्पन्दमिमितलोचनाभिरीक्ष्याभ्यागतोऽयं सादी गिरां गुम्फं रचयितुमारेभे— ' भ्रातर, ? के यूयम् ? एतदरण्यवासिनो भवन्त. सन्तीति प्रत्येमि ' इति । सादिनं संभाषमाणं निरीक्ष्य तेऽपि भाषितुं धैर्यमजायतेति तेषामन्यतमः पुरस्तादागम्य भाषितवान्— ' नैव श्रीमन् ? नैतदरण्यवासिनो वयम् । किञ्चित्कालपूर्वमेवात्रारण्ये कारणवशादुपागता वयम् । परम् । को नु श्रीमान् ? कुतश्चेदृश्यां तमोबहुलायां निशायामिहागमनं भवताम् ? इहारण्ये अद्यमार्गी भवानिति प्रतीमो वयम् ' इति ।

सादी । आम्; तथैव संवृत्तम् । स्वसहचरेण साकमहमद्यापराह्णे मृगयार्थं निर्गतवान् । कुरङ्गमनुसरतो मम विश्लेषोऽजनि सहचरेणेति महारण्येऽस्मिन्नुपेयिवानहम् । मार्गमलभमानो वनेऽहमितस्ततोऽवितरां परिभ्रमयन्ते दूरादेनं प्रकाशमपश्यमितीममनुलक्ष्येह समागतोऽस्मि ।

मानवः । शुभमागमनं भवताम् । श्रीमन् ? कोऽपि नायकोऽत्रभवानिति मन्येऽहम् ।

सादी । नैव, नास्म्यहं नायकः ।

मानवः । तत्को नु खलु श्रीमान् ? क्व च निवसति भवान् ।

सादी । विजयनगरवास्तव्योऽस्म्यहम् ।

मानवः । महाराजश्रीविजयसिंहस्य राज्ये निवसति श्रीमान् ? भवतु । किमभिधानमत्रभवताम् ? ।

---

१ नदीतीरे । २ ' वराहस्पर्धेतो यः सिंहसंहननो हि सः ' इत्यमरः । ३ विशालवक्षस्थलम् । ४ हारम् ।

सादी । 'विजयसिंह' इति मे नामधेयम् ।

सहसैव तत्रस्थाखिलजनमुखात् 'क्व एवम् ? ?' इत्युद्गारो निर्गतः । उद्गारेणैव समस्तैर्दर्शनार्थे मिलेतुः सर्वे । अनन्तरमाखिलास्तूष्णीकाः संभूय विजयसिंहमुखं निभालितवन्तः ।, अथ योऽयं विजयसिंहनृपतिना समं संभाषितवान्; तेन मानवेन महाराजार्थं कुटीरे वर्तमानमेकं 'प्रस्तं तल्पमानीय बहिर्निधाय तदुपरि समुपवेष्टुं निर्दिष्टो राष्ट्रपतिः । तैः परिवृतो महाराजश्रीविजयसिंहो मध्यमध्यतिष्ठत् । अथैको महाराजस्याज्ञानेयं ...चितस्थूलशाखाया-मावध्य तदग्रे व्यजनभारं निक्षिप्तवान् । अन्यः कमण्डलौ तदर्थं जलमानीतवान् । तज्जलेन प्रक्षालितं निजहस्तमुखादि नरेन्द्रेण । तत्र इतरेण वटपत्रावल्यां विविधानि फलानि समानीय महाराजपुरो निधाय भोक्तुमयाचि । एतां मानवानामीदृशाऽऽदरातिथ्येन परमाह्लादितः फलानि भोक्तुमारेभे नरेन्द्रः ।

महाराजे फलाशनपरायणं निरीक्ष्यासौ प्रथमाभाषको मानवः कमप्यपरं जनमाकार्य तदीयकर्णे किमप्युदीर्य तं विसृष्टवान् । विजयसिंहः फलाशनं विधाय पानीयं निपीय निवृत्य स्वकर्मणस्तेन मानवेन समं विविधं समालपत् ।

इतः प्रहितोऽयं पुरुषः मन्थरमन्थरो महारण्यवर्त्मना प्रयाति स्म । अतिक्रान्तो निशीथसमय. सम्प्रति । पुरुषोऽयं बहूनि क्रोशांसि समुल्लङ्घ्योर्वरचम्पूस्थलानि चातिक्रम्य शूरस्य शूरसिंहस्य शिबिरान्तिकमुपाजगाम । अस्यामेवाटव्यां 'शिबिरं सन्निवेश्य न्यवसत् शूरः । य एते इतानुं महाराज्ञ कुटीराग्रगो मिलिता अभवन्; तेऽप्यस्यैवानुचरा आसन् । अथ विजयचन्द्रसिंहौ मृगयां खेलितुं निर्गन्तारावेति प्रागेव प्रवृत्तिमुपलब्धवान् शूरसिंहः । उभावपि तौ महारण्येऽस्य मध्यमापातियपि समरेऽदृक्षौ । तद्द्वयोरन्यतर कदा वियुक्तो भवेदित्यवसरं प्रतिपालयन्नतिष्ठत् शूरः । निर्वैत्रिकस्मात् विजयसिंहचन्द्रसिंहौ कुरङ्गमनुधावितौ । महाराजोऽतीवदूरे निर्गतः । समनुसरंश्चन्द्रसिंहोऽपि मार्गद्वयसङ्गमस्थलमाससाद । विभिन्नदिग्गमनयोः पन्थानौ निरीक्ष्य तत्रोपरत्य कार्यं व्यचिन्तयत् । इत्थं चन्द्रसिंहविजयसिंहयोर्मिथो विश्लेषोऽजनि । इदमपि सर्वं विज्ञातवान् शूरः । ततोऽसौ कञ्चन किङ्करं पथप्रदर्शकत्वेन राजकुमारस्य समन्तरितपथचिह्नानि निर्दिश्य कयाऽपि रीत्या तं प्रतार्य निजाश्रमानेतुमादिश्य प्राहिणोत् । इतरांश्च द्वादशसंख्याकानन्यदिशि विजयसिंहनृपं शोधयितुं प्रेषितवान् । प्रेषितैरेभिः किमकारीति विदितमेव वाचकानाम् । पुनरिदानीं प्रकृतकथामनुसरामो वयम् ।

शिबिरान्तिकमुपागतोऽयं पुरुषस्तत्र पर्यटन्तं प्रहरिणं शूरसिंहमाकारयितुं कथितवान् । यामिकोऽसौ परिवेश्यानु शिबिरान्तः प्रविश्य शूरसिंहं सहादाय तत्रोपस्थितवान् । शूरसिंहं विलोक्यायं पुरुष प्रणम्य सावज्ञैकदृश्यो ।

---

१ पुरतः । २ इत्थं शाखाग्रेषु । ३ व्यजनम्—पंखा । ४ छेत्तुमभियेषः । ५ निर्गतुम् ।

क्रूरसिंहः। विक्रमसिंह ? किं वृत्तमुपनीतवान् ?

विक्रमसिंहः। श्रीमन् ! यत्र यत्र कुटीरं कृत्वा स्थिताः स्मस्तत्राधुनैव किञ्चित्काल-पूर्वमेव समायातोऽस्ति कश्चिन्मल्लतल्लज इव सादी। तं यथोचितं सत्कृत्य कुटीरे स्थापितवन्तो वयम्।

क्रूरः। कीदृशोऽयमश्वारोहः ? कश्चासौ ? इति जानासि किमु ?।

विक्रम०। आम्, जानेऽहम्। कृष्णवर्णोऽस्य गन्धर्वः। स एष साधारणशूद्रपुरुष इव दृश्यते। किन्तु तस्य तेजस्विनी नयने दर्शनीयमोजास्वि यदनयो निरीक्ष्य महावीराणामपि हृदयं प्रकम्पेतेवेति प्रतीयते।

क्रूर०। ( सोद्वेगम्। ) अलं प्रकृष्यरज्जुगुम्फनैः। ननु सुंक्षेप झटिति कियामाख्यमिति।

विक्रम०। विजयसिंहनामासौ।

क्रूरः। ( सहर्षम् ) किं किं कथयसि[1] अपि सत्यमिदम् ? पतितोऽयमन्ते स्वजाला-भ्यन्तरे ? ( स्वगतम्। ) अहह[2] अत्युत्कृष्टं मम भाग्यम्। परित्यक्तश्चेदयमवसरो न पुनर्लभ्योऽयमीदृशः कदापि ? [3]एतर्ह्येव मम फलिष्यति निर्धारितम्। कृतकामोऽद्य भविता कुमुदिनीमाहर्तुं क्रूरसिंहः। कुमुदिनि ? ननु तिरस्करोषि मां त्वम् ? परमन्ते त्वं क्रूरसिंहस्यैवास्य दासी भविष्यसीति दृढमवगच्छ। अस्तु ? पश्चात्सेत्स्यति तदखिलम्। ( प्रकाशम्। ) विक्रमसिंह ?।

विक्रमसिंहः। आम्, श्रीमन् ? किमाज्ञाप्यतेऽयं दासः।

क्रूरसिंहः। गत्वा त्वं कालसिंहमिह प्रेषय।

विक्रमसिंहस्तु– 'बाढम्' -इत्यभिधाय सादरं नत्वा प्रस्थितः। मुहूर्तानन्तरं दृढपुष्ट-वाङ्गः सुसज्जितशस्त्रपाणिरेकः पुरुषस्तत्रागत्य क्रूरं प्रणम्य पृष्टवान्– 'को निदेशः श्रीमताम् ?' इति।

क्रूर०। कालसिंह ? इदानीमेव सर्वेऽस्मदीयभटा इतोऽनतिदूरमरण्यनिकुञ्जेषु पृथक्पृथङ् निलीय तिष्ठन्तु। यदाहं संकेतध्वनिं करिष्यामि तदा सहसैव सर्वे बहिर्निर्गत्यागच्छन्तु। पश्चाद् यद्विधेयं तदहं तदानीमेव वः सूचयिष्यामि।

कालसिंहः। अतिसमीचीनम्। गच्छाम्यहं भवदादेशमनुष्ठातुम्।

क्रूरः। गच्छ। नायं समयो विलम्बितुम्।

ततः क्रूरसिंहो विजयसिंहसकाशं गन्तुं निर्गतवान्। कालसिंहोऽपि क्रूरसिंहनिदेशानुसारं सर्वं यथोचितमायोज्य क्रूरसिंहसंकेतं प्रतीक्षमाणो विजयसिंहाधिष्ठितकुटीरतो मनाग्दूरे निलीय स्थितवान्। अत्यानन्दनिर्भरहृदयोऽयं क्रूरो यत्र तदीयैरनुचरैर्विनिर्मितमासीत्कुटीरं तत्रागतवान्। स्वसेनापतिं सम्प्राप्तमवलोक्य सर्वे तत्रस्था प्रणेमुः। महाराजविजयसिंहस्तु क्रूरसिंहमेवं दृष्ट्वा

---

१ प्रशान्तमाह्यः। २ भय। 'भयग स्वरयः'। ३ इदानीमेव।

निरीक्षितवान्। शूरसिंहो विजयसिंहनिकटमुपेत्य स्वान्तर्भावं गोपयित्वा बहिः स्नेहं प्रदर्शयन् विजयसिंहम्– 'अये ? महाराजश्रीविजयसिंहः प्रस्थितवान् किमु ? राजेन्द्र ? प्रणमति शूरसिंह एष भवन्तम् ?' इत्यभिधाय प्रणनाम।

तत्कालमेवैनमभिज्ञाय क्षणं तूष्णीं स्थित्वाऽभाषत विजयसिंहः– 'दुरात्मन् ? शूरसिंह ? अत्रैव निवासस्ते किमु ?' इति।

शूरः। आम्, प्रभो ? अत्रैव निवसति ग्रामोऽयं ग्रैमकः। यत्र स्थितोऽसि भवान्, तत्स्थानं भृत्याधीने सन्ति ममैव। परिचितः स्यादधुनायं ग्रामः श्रीमता !

विजयसिंहः। सम्यक् परिचितः !! सर्वैः खलु सुजनापेक्षयाऽधिकमभिजानन्ति दुर्जनम्।

शूरः। सत्यमाह, राजेन्द्र ? यं भवान् दुर्जनं मनुते तस्यैव शूरसिंहस्याधिकारे तिष्ठति भवानिदानीम्। अभिलषाम्यहं भवन्तं बन्दीकर्तुम्।

विजयसिंहः। बन्दीकर्तुमिच्छसि ? रे, मां बन्दीकर्तुं निश्चितवान् किमु त्वम् ? किं कर्तुं शक्तोऽसि त्वमस्य विजयसिंहस्याग्रतः ? मदुपमर्द्दमागतोऽहं त्वामेव व्यापादयिष्यामि। त्वामेव संचूर्णयिष्यामि ! इति ब्रुवाणः स्वमसिमुद्धरन् प्रमन्युर्विजयसिंहः। नेत्रे चामुष्य तदानीं रक्तायमाने अतिरक्ते संजाते।

शूरः। आ एवम् ? विजयसिंह ? मरणीयमेव त्वया सम्प्रति ? स्मरणीयश्चेश्वरः सम- ये त्वया। नाद्याहं त्वां जीवन्तं विमुञ्चामि। ध्रुवमहं निजोपवैरं शोधयिष्यामि।

विजयसिंहः। क्षत्रियापसद दुर्विदग्ध ? किमिति वृथा प्रवृद्धोऽसि स्वाधिकेपदवेन ? हंसि मां त्वमुताहं त्वां निहन्मि इति युद्ध एव भवतु निर्णयः।

शूरः। न जानासि खलु मदीयमतुलं बलमधुनापि ? वेत्सि कोऽहम् ? मदीयनाम्नाऽद्य धरणिरपि प्रकम्पेतैव ? तत्कियन्मात्रा तव शक्तिर्ममाग्रतः ?

विजयसिंहः। शृणु रे मदावलेपान्धदुर्विदग्ध पापिष्ठ ? शृणु–

'मेघः शारद एव काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युत्सृजति ॥''

शूरः। विजयसिंह ? कोऽपि बलवानयं सिंहः शूरसिंह इति विद्धि।

विजयसिंहस्तु–'अहं तु त्वां कञ्चन जम्बुकं मन्ये। दुरासद ? वरेहि नरकालयं प्रहि- णोमि त्वामहमधुना।' इति प्रोच्य कोशात्कृपाणमाकृष्टवान्।

घनपटलैरपि समपनुन्नमिव कुर्वाणा बहिर्निर्गत्य विद्युल्लतेवासौ कोशान्तरवारिरियं शारद- शर्वरीसमयोदितचन्द्रमसः प्रकाशे।

तावत्तमपि युद्धमुपनतमित्यवधार्य शूरसिंहः स्वानुचरानाकारयितुं संकेतध्वनिमकरोत्। संकेतध्वनिसमकालमेव निर्गत्य कतिपयानुगैः कालसिंहः स्वसैन्यैः समं तत्राभ्युपयात्।

---

१ शरदो घनः। २ तरवारिः।

कालविलम्बमालोक्य क्रूरो महाराजं निग्रहीतुमादिश्य स्वयं ततः कियद्दूरं स्थित्वा सर्वं वृत्तमपश्यत् ।

क्षुधिता वृका इव सैनिका महाराजश्रीविजयसिंहं पर्यवारयन् । अनयाऽऽकस्मिकविपदा कपटजालेन च क्रूरस्य विजयसिंहनृपकोपज्वलनोऽतुलं प्रजज्वाल । अथ हृदये दयालुमीश्वरमभिध्याय पाणौ कृपाणं कलयित्वा मदान्धद्विपमधिरूढोऽसौ नरदेवस्तृणानीव 'लवित्रेण कृषीवलः करवालेन रिपुसैन्यं कर्तयितुमारेभे । सैनिका अपि शात्रवा निस्त्रिंशानाकृष्य विजयसिंहनरेन्द्रमभ्यपतन् । परितः करवालं चालयन्नयं नरमणिर्विजयसिंहः सपत्नखड्गाघातान्निजमण्डलाग्रेण निरुद्धवान् । तद्रोषः प्रकम्पत्स्थोष्ठकौक्षेयककरवरपाणौ तीव्रवेगेन परिभ्रमन्निजक्रोडागतशत्रुभटान् द्विरकरोत् । यामिनीतुरीययामे प्रारब्धं घोरमायोधनम् । क्षतानां क्षितितलविलुठनविवशानां प्रत्यर्थिभटानां महानाक्रन्दकोलाहलः प्रादुरभूत् । प्रहरमेकं तुमुलं जन्यमजनि । तदवधौ वीरेन्द्रशिरोमणिना विजयसिंहनरेन्द्रेण शतार्धं शत्रुसैनिकानां यमालयं प्रस्थापितम् । अवशिष्टभटैः सममधुनाऽपि महाशौर्येण युध्यते स्म नृपतिना । अत्रान्तरे महाराजस्य प्रियतमस्तुरङ्गमः प्रतिद्वन्द्विखड्गाघातेन क्षतसर्वाङ्गो रणाङ्गने पपात । तेन सहैव महाराजोऽपि भुवि निपतितवान् । यावदुत्तिष्ठति महाराजस्तावदेव दुष्टैश्चतुर्भिर्भटैर्युगपदभिपत्य महीपतिपृष्ठस्थले सममेव खड्गेन प्रहृतम् । चतुर्णामेककालावच्छिन्नप्रहारेण विजयसिंहनरेन्द्रो वसुन्धरायां निपतितवान् । क्षणादेव चास्य सुचिरमात्मा सच्चिदानन्दकन्दानन्दामृतरसरसायनरसनचतुरो दिवमलङ्कृतवान् ।

विजयसिंहमृत्युना नृशंसस्य क्रूरसिंहस्य हृदयेऽतुलानन्दोऽजायत । तत्रागत्यासौ नराधमकीटः कोपाद् निष्कृष्य कृपाणं विजयसिंहनृपस्य मृतकलेवरे प्रहृत्य वपुषस्तदीयं मस्तकं पृथगकार्षीत् । तथापि निजवैरनिर्यातनं न जातमित्यवधार्यैव मत्सरोऽयं तदीयमस्तकं प्रकम्पकुन्तप्रान्ते समासज्य महासमरे संप्राप्तविजयश्रीक इव दुन्दुभिनादं कुर्वाणो निजशिबिरान्तिकमाजगाम । दुन्दुभिनादेनाकस्मादुद्बुद्धय चन्द्रसिंहो गाढनिद्राया निजहस्तद्वयं नियन्त्रितमपश्यत् । अथायं विचिन्तितवान्– 'किमन्ते विश्वासघातं विधाय चण्डालोऽयं मम दयाया इत्थं लाभमग्रहीत् ? हन्त ! प्रतारितोऽहमन्ते दुरात्मना ?' इति ।

विश्रम्भघातं कृत्वाऽऽत्मानं बन्दीकृतवान् क्रूरोऽयमित्यालोच्य प्रदिदीपेतरामस्य कोपकृशानुः । ततो भयङ्करं सिंहनादं व्यतानीदयम् । तेन सिंहनादेनातितरां चाकम्पन्त तत्रत्याः प्रहरिणः । महादरा महोग्ररूपं कृत्वा चन्द्रसिंहोऽयं प्रधाव्य लोहशृङ्खलानिबद्धहस्तयुगलेन घटेन प्रहरिणः शिरसि प्राहरत् । आयसनिगडेन सह निपतत एवास्य दृढपाणिद्वयस्य विददार वराकप्रहरिणः शिरः । भ्रमरिकया पादौ प्रहरी धरणितले निपपात । प्रचुरं रुधिरं प्रावहत्तस्य शिरसः सधारम् ।

'क्वासि नृशंस क्रूरसिंह ! दर्शय शीघ्रम् ।' इति सक्ष्वेडमाक्रोशयन्नयं चन्द्रो विष्वगन्वेषितवान् क्रूरम् । प्रमन्युनाऽस्य नयने हिरण्यरेतः– सवर्णवर्णे संवृत्ते । आकृतिरमुष्य

१ दारुण । २ वर्धितः ।

महारुद्ररूपतां प्रतिपेदे। अत्रान्तर एव कुन्ताग्रनिवेशितं विजयसिंहमस्तकं वामहस्तेन समुत्तोल्य समागच्छन् ददृशे क्रूरचन्द्रेण। चन्द्रसिंहमालोक्यैव भीतत्रस्तः क्रूरसिंहः सावधानोऽभवत्। तदीयं रुद्ररूपं च निरूप्य समवेपतायम्। तत्क्षणमेवासौ निवर्तमानान् सैनिकानाकारयत्। रोषारुणनेत्राभ्यां दिधक्षुरिव तं तदभिमुखमालोक्य प्रावोचच्चन्द्रः– 'धिक् त्वां नपुंसकम्!! कुक्षाविव कथं न क्षीणस्त्वम्? षण्ड! क्षत्रियपुत्रस्तु कदापीदृशं विश्रम्भघातकं कर्म नैव कुर्यात्? हन्त किं त्वां कुर्याम्? निगडितोऽस्म्यहमिदानीमन्यथा सद्य एवाहं तवेदृशस्य राक्षसकर्मणः फलं त्वामास्वादयिष्यम्।' इति।

चन्द्रसिंहस्यावेशमयानि वचनानि निशम्य क्रूरसिंहो विजयसिंहस्य कुन्तप्रान्तनिवेशितं मस्तकं तत्पुरतो धृत्वाऽवदत्– 'चन्द्र! निष्फलस्तव रोषः! अपाकृतोऽयमेकः कण्टकस्तु विधूतो निजधर्मेण, साम्प्रतं त्वमेवापरः कण्टकोऽवशिष्टोऽसि। त्वमपि सम्प्रति कतिपयदिनैरेवामुत्र प्रस्थास्यसे। इतस्तृतीये दिवसे चण्डिकायै तव वपुरुपहारीकरिष्यते'। इत्युक्त्वा साट्टहासमहसदयं नृशंसः। हसन्तममुमवलोक्य धिक्कुर्वन् कुपाऽभूत चन्द्रसिंहः– 'किं हससि रे नृशंस? पश्य समालोचय? आकारय सम्प्रति स्वसैनिकान्। क्व सन्ति ते क्लीबाः? नरपिशाच! चन्द्रोऽयं नियन्त्रितोऽस्तीति मत्तो बिभीयादिति मा मंस्थाः खलु त्वम्? शृगाला यदि संगच्छेरन् मृगेन्द्रस्य पुरतो बिभीयात्किमु तदा मृगपतिः? विश्रम्भघातिन् कृतघ्न? सद्य एव निर्यातयामि महाराजश्रीविजयसिंहस्य भूपतेर्वैरम्। कपटकारिन्! निद्रायां मां प्रगृह्य कथमिवात्मानमाह्लादयसि?' इति।

अथ सम्पूर्णबलेनैव करगतां शृङ्खलां शकलीकृत्य चन्द्रः– 'पश्य–रे मातापितृहतक! पश्य ममास्य लोहशृङ्खलाया दुर्दशाम्'। इति निगद्य क्रूरसिंहमभ्यद्रवत्। (भयेन भटास्तु पाषाणवत्स्तब्धाः संजाताः।)

लोहशृङ्खलां त्रोटयित्वा स्वाभिमुखमागच्छन्तं चन्द्रसिंहं दृष्ट्वा–'नास्ति सम्प्रति स्वजीवनाशा' इत्यवधार्य क्रूरसिंहो व्याकुलीभूय सैनिकानगादीत्– 'निगृह्यतामनुपायं व्यापाद्यतां सत्वरमिति'। 'रे कालसिंह! भवे धीरसिंह! रक्षत माम्। हतोऽहम्, अद्यैव मे प्रहरिष्यति मामयम्' इत्याक्रन्दन् पलायितवान् क्रूरः।

एतेनावधीरितौ दुर्दशां निरीक्ष्य सैनिका युगपदेव चन्द्रमाक्रम्य पर्यवारयन्। अत्रान्तरे तु चन्द्रः कठिनपादप्रहारैः कतिचिन्मुष्टिप्रहारैर्यमसदनमनैषीत्। परन्ततो बहुभिः सैनिकैः परिवृतोऽयं निःशस्त्रश्चन्द्रः परिश्रान्तः। किमयं विधातुं शक्नुयादेकः? सैनिका मुद्गरैरभिहत्य न्यमर्दयन्निमम्। पाणिपादं पाश [illegible] दृढपाशनिगडेन न्यबध्नन्। चन्द्रं बन्दीकृतमालोक्य योऽयं क्रूरसिंहोऽद्यावधि भिया कम्पते स्म, सोऽधुना सावधानमनाः सन् प्रहृष्टवान्। तादृशं तं ततो–नेतुमादिशत्क्रूरो भटान्। भटा निगडितममुं चन्द्रं शिविरे समानयन्। 'अथ दिनचतुष्टयं कुत्रायं स्थापनीयः?' इति विचिन्तयामास क्रूरसिंहः। अन्ते गुप्तगृहे स्थापनीयोऽयमिति निर्णीतवानयं क्रूरः। तत्कालमेवामुं चन्द्रसिंहं

गुप्तगृहे नेतुमादिष्टवानसौ कालसिंहम् । कालसिंह स्वभटैः समं चन्द्रं गुप्तगृहे नीत्वा तत्रै-कस्यामन्धीयस्यां कन्दरायां निरुद्धवान् । तदुपरि निरीक्षणार्थं नियुक्तौ तत्राद्गसिंहपुष्ठसिंहौ प्रहरिणौ । अखिलकर्मणो निवृत्य शूरसिंहः सुन्दरपर्यङ्के शायितवान् । 'स्वस्यैको महान् रिपुरद्य निहतः, अपरश्च बन्दीकृतः । सोऽपि सत्वरं व्यापादयिष्यते, ततः कोऽपि निजमार्गे न तिष्ठेदन्तरायकारी । अनायासेनैवाधुनोपलप्स्यते कुमुदिनी ।' इतीदृशीं सुख-मयीं कल्पनासृष्टिं विरचयन्निद्रयाऽऽश्लिष्टोऽयं दुरात्मा ।

इतस्तु– 'अये ! अद्य श्व इति वदतो मम दिनद्वयमतिक्रान्तप्रायम् । परमद्यापि किमिति न निवृत्तौ मृगयाया राजेन्द्रराजनन्दनौ ? किं तयोरनिष्टं तु किमपि न समासंघटितम् ? अस्मिन्नल्पीयस्येव समये कीदृश्यो भयानका घटना घटिताः ? अत एवानिष्टमाशङ्कते मम हृदयम् । मनोऽपि ममातीव विमनायते[1] । किंकर्तव्यताविमूढ इवास्म्यहम् । सच्चिदानन्दकन्दप्रभो ! त्वमेव सत्यस्यावलम्बनमसि । पाहि त्व मदीयनरेन्द्रनृपनन्दनौ । दयाम्बुनिधे देव ! द्वितीया रजनिरपि समुपस्थेयमद्य । परमधुनापि तयो कमपि वृत्तान्तं नाधिगत-वानस्मि । सर्वशक्तिमन् परमेश्वर ? अधुना तु यदेव कुर्यास्त्वं प्रमाणं तदेव ननु ? किन्तु शत्रुणा किमपि कपटजालं तु न कृतं भवेत् ? ( विमृश्य । ) मा मैवम् । एवं तु न सम्भो-भवीति । स्यान्ननु कदाचित् किमपि कूटजालमरातिना विरचित किममुना ? वीराग्रगण्या-विमौ नादेवदेवकुमारौ–इति स्वजाल प्रपञ्चयितुमक्षमार्थौ भवेदसौ प्रत्यर्थी । परमेतद्यपि भायातौ तावित्ति किमु निर्धारणीय मया[2] अतिक्रमपि प्रकृतिमण्डल चिन्ताकुलं प्रतीयते । श्रीमती राजमहिषी राजकन्या कुमुदिन्यपि भृश शोकातुरे भूत्वाऽभीक्ष्ण वृत्तान्तमनु-पृच्छाते । हन्त ! किमह ताभ्या निवेदयामि वृत्तम् ? अद्यापि सेनापतिरमरसिंहोऽपि गवेष-यित्वा न परावृत्त ।' इति विचिन्तयन् वृद्धो मन्त्रिवरः प्रतापसिंहः स्वमहालयाद्वालि-कायामितस्ततः पर्यटति स्म ।

'यातैव यामा यामिनी परमधुनापि किमिति कोऽपि कमपि वृत्तान्तं नोपानीतवान्' इति चिन्तोद्विग्नहृदया राजमहिषी प्रभावती प्रहरिवीरमेकं प्रधानमन्त्रिणमाकारयितु प्रेषितवती । वृद्धामात्यवर्य. प्रतापसिंह परिधाय वासासि प्रहरिभटेन सार्धं प्रविवेश प्रासादम् ।

प्रासादस्योपरितनशालायां राजकन्यया सम राजमहिषी विषण्णायमानहृदया निषण्णाऽऽसि । प्रदीपोऽपि मन्दालोको विलोक्यते । तत्रोपस्थितवान् प्रतापसिंह । दृष्ट्वैव प्रधान पृष्टवती राष्ट्रमाता– 'मन्त्रिवर्य ! अप्युपलब्धं किमपि वृत्तं भवता ?' इति ।

प्रतापसिंहः । मातः ! तथैव चिन्तयाऽऽकुलोऽहम् । परितोऽन्वेषणाय बहवो वीर-सैनिकाः प्रेषिता. परमन्ते निराशवदनाः परावृत्ता सर्वे । प्रवृत्तिरपि काचन नैवोपनीता ।

मन्त्रिपुङ्गवस्य निराशाजनकं वचनमिद निशम्य रोदितुमारब्धवती कुमुदिनी । कथितवती चेय गद्गदगिरा– 'किमाह मन्त्रिवर ! अपि नैवोपलप्स्यन्ते मम तातचरणा ? अये !

१ विमना दुर्मना इवाचरति विमनायते । २ विस्तारयितुम् ।

विधातः ! त्वमपि प्रतिकूलः प्रतीयसे किमु ? आर्यप्रतापसिंह ! गत्वा भवान् कुतोऽपि तातचरणान् विचित्य समानयतु। शरणं भवानेवास्ति भवताम्।' इत्यभिधाय प्रधानोरसंगे निजोत्तमाङ्गं निधाय रोदितुं प्रारभत कुमुदिनी। तां सान्त्वयन्नवादीन्मन्त्रिवरः – 'राजनन्दिनि ? किमिति व्याकुलीभूयाक्रन्दसि ! धैर्यमाधेहि हृदि। मन्ये विश्वासयति भगवानन्तर्यामी प्रभुः। पश्य–अधुनापि स्वसैन्यैः सह महाराजमन्वेष्टुं गतोऽयममरसिंहोऽपि न निवृत्तवानिति कदाचिदरण्येव महाराजेन समं सङ्गतो भवेदयमित्यहमाशासे।' इति।

अत्रान्तरे पूर्वोक्तः प्रतीहारः प्रविश्य प्रधानवर्यम्–'श्रीमन् ! बहिः सेनापतिरमरसिंहः समुपस्थितोऽस्ति। स च दिदृक्षते भवन्तम्। आदेशश्चेदहं प्रवेशयामि तमिति' व्यजिज्ञपत्। 'सत्वरमभ्यन्तरे प्रवेशय।' इति समाज्ञप्तवानमात्यवर्यः। अथ क्षणेनैव बन्दीकृतपुरुषद्वयानुगम्यमानः सेनापतिरमरसिंहस्तत्रोपस्थितवान्। तमवलोक्यैव पृष्टवान् मन्त्रिवरः– 'अमरसिंह ! अप्युपनीता काचन प्रवृत्तिर्महाराजस्य ?'। इति।

अमरसिंहः। मदन्वेषणा बन्दीभूताविमौ मानवौ वृत्तान्तमधिकं विस्तृतं तावेव कथयिष्यतः। ईदृशश्चेन्निपातनीयो मदुपरि प्रसक्तः प्रभुणा किमिति जीवितोऽहम् ?।

प्रतापसिंहः। (सखेदाश्चर्यम्।) किं किं वदसि ? अयि किमपि दारुणं वृत्तमजनि ? अमरसिंह ? किमिति बाष्पजलं मुञ्चसि ? ब्रूहि सत्वरं यदेव वक्तव्यं त्वया।

अमरसिंहः। (साश्रु) हन्त ! किं तदाऽमङ्गलमयं वृत्तमिदमधुनैव मन्दभागधेयेन कथनीयम् ! हा हन्त ! किमिति न विदीर्यते ममेयं रसना। राजमातः ! राजपुत्रि ! शृणुत इदमाग्नेयकल्पमस्य कथनं शुचामपि। महाराजं राजकुमारं चन्द्रसिंहञ्च विचेतुमहं वनाद् वनान्तरम्, उपत्यकाया–उपत्यकान्तरं व्यचाम्, परं क्वापि न लब्धा तयोः प्रवृत्तिरपि। अथान्वेषणविपरिश्रमक्लान्तो निराशः सबलः प्रत्यावर्तितुं विचिन्तयन्नेवारण्यधर्मेणा पुरता-विमौ किमप्यादाय गच्छन्तौ व्यलोकयम्। तदीयमाशङ्कितगमनप्रकारं विलोक्य संशयादहं गृहीतवानेतौ। अथ सानुसन्धानमेतौ शोधयता मया तदुपकण्ठादिदं प्राप्तमित्यभिधायामी तयोरन्यतरस्य शिरसः करण्डमवतार्य प्रधानवर्यसमक्षं निधाय स्वयं निमीलितलोचनोऽवाङ्मुखोऽवतस्थे।

धीमतांप्रवरो वेपमानेन करेण करण्डपिधानमपावृणोत्। अपावृत एव तस्मिन् करण्डे महाराजप्रतापसिंहस्य मस्तकं विलोक्यैव–'हा हन्त ! अयि विभो ! केयमवहेलना ! !' इत्यभिधाय प्रतापसिंहो निपपात धरातले। नरेन्द्रमस्तकं विलोक्यैव नरनाथकान्ता प्रभावती नरेन्द्रनन्दिनी कुमुदिनी चोभे करुणमाक्रन्द्य। निःसंज्ञे भूत्वा चेमे भूतले विलुलुठतुः। धीरवरोऽमरसिंहस्तु मुक्तकण्ठं विललाप। ईदृशं दारुणं हृदयद्रावकमाक्रन्दनं प्रवृत्तमालोक्य बन्दीकृतयोस्तयोर्हृदयमपि दयया द्रवीभूतम्। तयोरपि विलोचनाभ्यामश्रुबिन्दवो निप-

---

१ अन्तरे-मध्ये। २ उपत्यका-पर्वतसमीपस्थली। ३ बन्दीकृतवान्। ४ करण्डः पेटा-रत्नपेटकः।

तिमुपारेभिरे । अत्रान्तरे सचेतनो भूत्वा समुपविश्य प्रधानवरस्तारस्वरमारोदीत् । आक्रन्दनकोलाहलमाकर्ण्य शुद्धान्तवर्तिन्यो दास्यः प्रासादरक्षकाः सेवकाश्चान्येऽपि जना झटिति द्वाराण्यपावृत्य विलङ्घ्य शालान्तराणि क्वचित्स्खलन्तः क्वचिन्निपतन्तो धावमानास्तत्रोपेत्य हृदयप्रमाथिनीं घटनामालोक्य मुक्तकण्ठं रुरुदुः । अधुनापि राजमहिषी राजकुमारी चोभौ मूर्च्छावस्थायामवास्ताम् । प्रधानपुङ्गवस्तयोर्मूर्ध्नि शीतलं जलं न्यषिञ्चत् । मुहूर्त्तानन्तरमुभौ सञ्ज्ञामुपलभ्य समुपविश्य तारं रुरुदतुः । अथ कथं कथमपि सर्वानसान्त्वयदमात्यवर्यः । नेदानीं विलप्यते नरेन्द्रकान्तया । स्वहृदयदयितमूर्तिचिन्तनपरायणहृदयेयमधुना समाधिक्लेशेवालक्ष्यते । ईदृगवस्थामवलोक्य तां स्वहस्तेन प्राबोधयत्प्रधानः । अथैषा राजमहिषी चक्षुषी समुन्मील्य जगाद– मन्त्रिवर्य ! ।

**प्रधानः** । आम्, किमाज्ञापयति माता ? ।

**राजमहिषी** । क्वास्ति मे वत्सा कुमुदिनी ? ।

'अम्ब ! एषाहमास्मि' इति निगद्याक्रन्दन्त्येव कुमुदिनी जननीमालिङ्ग्य मुक्तगलं चुक्रोश । 'वत्से ! मा रोदीः ।' इति प्रोच्य राजमहिषी प्रभावती वा प्रधानमप्राक्षीत् सेनान्यम्–'अमरसिंह ? महाराजेन समं राजकुमारश्रीचन्द्रसिंहोऽपि गतोऽभवदिति किन्तु क्वास्तेऽसौ ? अपि जानीषे तदीयवृत्तं खलु त्वम् ? ।' इति ।

**अमरसिंहः** । नावैमि, मातः ! परमिमौ प्रगृहीतौ जनौ जानीतस्तदीयवृत्तम् ।

तत्क्षणमेव बन्धनान्मोचितौ बन्दीकृतौ पुरुषाविमौ । आदिष्टौ चोपवेष्टुम्, परमेतावुपविष्टावेव स्थितौ ।

**प्रभावती** । भ्रातरौ ? जानीथश्चेदखिलं वृत्तम् आख्यातं युवाम् । महदन्तरं जायते मम स्वामिचरणानाम् । प्रत्युत एव महाराजमस्तकेन समं मया सहगमनं विधेयम् । ( प्रधानं प्रति । ) प्रतापसिंह ! क्रियतां मदर्थं चितारोहणसम्भारश्चन्द्रवतीतीरे । अतिक्राम-तीयममूल्यवेला । ( बन्दीकृतं प्रति ) भ्रात ! महाराजस्य मरणं कथं समजनि ? तदीयसहचरस्य राजकुमारस्य किमभूत् ? इति सकलं विशकलय्य कथय वृत्तमिदानीम् ।

**प्रथमः** । पूज्यजननि ? क्रूरसिंहस्य किङ्करावावाम् । परश्वो निशि कश्चिदश्वारोहोऽस्मन्निवासस्थानमाससाद । अश्वारोहोऽयं स्वयं महाराजश्रीविजयसिंह एवासीत् । अस्मद्दलनायकेन सत्कृत्य सकलं वृत्तं पृष्टोऽयमात्मानं विजयसिंहनामानमाचष्ट । अतोऽस्मन्नायको नितरां प्रससाद । यतोऽमुमेव नायकं महाराजगवेषणार्थं कतिपयवीरानुगतं प्राहिणोत्क्रूरसिंहः । नायकोऽसौ महाराजं सम्यक्परिचर्य रजनीमखिलां तत्रैवातिवाहयितुं निवेदितवान् । सरलान्तःकरणो नरेन्द्रस्तत्कपटजाले निपतितः । अथ तदानीमेवामुना नायकेन कश्चन भटः क्रूरसिंहमामन्त्रयितुं विसृष्टः । क्रूरसिंहमादाय झटितीति निवृत्तोऽथ भटः । महाराजं विलोक्यैव क्रूरः परं प्रमुदितवान् । आदिष्टवांश्चायं भटान् महाराजं निग्रहीतुम् । महादेवि ? न जाने किं

१ शुद्धान्त –अन्तःपुरम् ।

वैरमासीन्नरेन्द्रेण साकमस्य नृशंसस्येति । सैनिका महाराजं निग्रहीतुमभ्यपतन्निति महीवल्लभोऽपि निजचन्द्रहासेन न्यरुणत्तान् । अत्रान्तरे परितो लतागुल्मपञ्जरायमाणेषु निकुञ्जेषु प्रागेवान्तर्धापितान् निजसैनिकानाहूतवान् संकेतध्वनिना क्रूरसिंह इति तेऽपि तत्राभिधाव्य युगपच्चन्द्रं जलधरा इव राजेन्द्रं नक्तञ्चराः पर्यवृण्वन् । ततो वीरेन्द्रचूडामणिर्निजं परमरमणीयामोदेद्विरफासारचन्द्रचन्द्रिकाचतुर्गुणितचाकचक्यचमत्कृतिचारुं चन्द्रहासं चालयन् प्रतिद्वन्द्विमण्डले मण्डलाकारं विचचार । तदीयचञ्चलचन्द्रहासप्रहारैर्बहवो रिपुनिकरा वसुन्धरापांसुपुञ्जमालिलिङ्गुः । परमन्ते नरेन्द्रतुरङ्गमः क्षताधिक्याङ्गः क्षितितलोपरि संपपात । तेन समं वसुन्धरापतिरपि वसुमतीमालिलिङ्ग । इममवसरमुपलभ्य चतुर्भिर्धूर्तैश्चतुरैः खड्गाग्रैः पृष्ठतो युगपदाक्रम्य नरदेवोऽभिहतः[1] । अथावनौ निपत्यायं क्षत्रियधर्मधारिधुरन्धरो वीरमण्डलाग्रगण्यो विजयनगराखण्डलोऽविलम्बितमेव सुधर्मासनमलङ्कर्तुं सुरलोकं प्रस्थितवान् ।

अस्मिन्नवसरे समाप्यहे महाप्राज्ञ एको जात इति रणाङ्गनमपास्याहं स्वस्थानमुपागम्य शायितवान् । अथान्येद्युः ( द्वितीये दिने । ) क्रूरसिंहो मह्यं महाराजमस्तकं समर्प्य— ' मस्तकमिदं क्वापि निर्जरमरण्ये निक्षेपणीयम् । ' इत्यादिष्टवान् । तन्निदेशानुसारमहं सहचरमिममादाय महाराजमस्तकं करण्डे गोपयित्वा क्वापि निक्षेप्तुं प्रस्थितः । अथ मध्यन्दिनेऽरण्यमार्गेण व्रजन्तौ महातपतया परिक्लान्तौ कस्यचिन्महीरुहस्य प्रच्छायशीतले तले निषण्णौ क्रूरसिंहदुश्चरितकथामकुर्वहि । अत्रान्तरे तेनैव पथा सेनापतिरयममरसिंहः स्वसैन्यैरनुगम्यमानः प्रयाति स्म । भाग्यं तस्य नेत्रपदवीमुपेतौ । सन्दिग्धमानसम्रजौ नौ निरीक्ष्य समीक्ष्य चास्मदभ्यर्णे करण्डमिमं संशयितवानयम् । तत्क्षणमेवैष करण्डममुं स्वहस्तगतं विधायापावृणोत् । अथ नयनपथमागतमस्य महाराजमस्तकम् । विलोक्यैव तन्मूर्छितः सपदि धरणितले निपपात । तदीयवीरैरावां निगृह्य बन्दीकृतौ । मुहूर्तानन्तरं प्राप्तचेतनः करण्डमिमं सहादायामरसिंहोऽसौ श्रीमच्चरणारविन्दसमीपं नौ समानीतवान् । ' इति कथयित्वा प्रथमोऽयं बन्दीकृतः सम्यक् संवृत्तः ।

प्रभावती । हा हन्त ? अन्ततः पापपापरिपुष्टेन दुष्टभुजङ्गमेन ममैव दृष्टः ! किन्तु ! भ्रातः ? महाराजेन समं राजकुमारोऽपि समरे न गतः किन्तु संवृत्तमिति जानासि किमु त्वम् ? ।

' आम् । भगवति ! अहमवगच्छामि खलु तद् ' इत्यपरोऽब्रवीत् ।

प्रभावती । तत्कथय किं वृत्तान्तोऽयं राजकुमारः ?

एष उवाच– ' यं राजकुमारं पृच्छति भगवती तस्य चन्द्रसिंह इति नामधेयं वर्तते । सम्यक् परिचिनोमि तमहम् । राजेन्द्रराजनन्दनौ मृगयाक्रीडनार्थं प्रस्थितौ, तौ चास्मिन्नेवारण्ये– मारितस्तेनापि मामन्यारौ इति वृत्तान्तं पूर्वं प्रवीरवर्णस्य नृशंसोऽयं क्रूरसिंहो

---

१ द्वितीयः–दिनः । २ आयव्याण इन्द्र. । ३ सुपर्णं देवता ।

माम् ' एतयोरन्यतरः पृथगभूयेह कानने मार्गगवेषणार्थं परिभ्राम्येदस्मन्मार्गदर्शको भूत्वा त्वं तं मदन्तिकमानयेः ' इत्यादिष्टवान् । मामसौ कतिपयानि राजकुमारपरिचयचिह्नानि निर्दिष्टवानिति तानि चिह्नानि हृदि निधाय परितो महारण्ये परिभ्रान्तवानहम् । यदा महाराजो दुरात्मनां कपटजाले निपतितः स्यात्तत्पूर्वमेव प्रदोषसमये कान्तारे मार्गं विचिन्वन् राजकुमारो दूरत एव मदीयनेत्रातिथिर्जातः । तत्क्षणमेवाहं तन्निकटमुपेत्य तं धर्षयित्वा स्वनिवासस्थानसमीपं नीतवान् । अत्रान्तरेऽस्मन्मनुजानां दशसंख्याकं दलमस्मदभिमुखमुपागमत् । मिलितोऽहं तस्मिन् । अस्मद्दलाधिपो राजकुमारमाक्रमीत् । आक्रमणसमकालमेव–' वञ्चितोऽहम्' इत्यवधार्य राजकुमारः क्रोधानलपरीतः कृपाणमाकृष्यास्मानभ्यपतत् । पश्यतामेवास्माकमस्मन्नायकेन सहितमष्टौ पुरुषानयं निजघान । तदवधौ तत्रोपेयिवान् शूरसिंहः । राजकुमारं 'निध्याय हर्षितः सभयं हर्षनादं वितेने । क्षणादेव तयोर्द्वन्द्वयुद्धमजनि । युद्धान्ते दुरात्मानमेनं शूरसिंहं भूमौ निपात्य तदुरस्स्थलमारूढवान् राजकुमारः । '

प्रभावती । (ससम्भ्रमम् । ) तत्किं महाराजवैरं शोधितवान् राजकुमारः ? व्यापादितोऽयं दुरात्माऽमुना किमु ? ।

एष ऊचे–' न खलु निहतः ? अम्ब ? नृशंसोऽसौ जीवितोऽस्ति स्वकपटकौशलेन । अतिकरुणं प्रार्थ्यानुकम्पार्थं प्राणभिक्षामवाप्तवानयं चन्द्रसिंहसकाशात् । श्रूयतामग्रे किं कृतममुनेति ? अथ न किमप्येव संवृत्तमितीव मुखाकृतिं विधायायं नृशंसो राजकुमारं बभाषे–' चन्द्रसिंह ? रजनिरियं संवृत्ता साम्प्रतमित्यस्मिन् समये मम निवासस्थानमायातु भवान् । श्वः प्रातःकाले धीमता सह विजयनगरमागन्ताऽस्मि । तत्र गत्वा महाराजेनात्मानं क्षमापयिष्याम्यहम्' इति । इत्थं तदीयनम्रवचांसि निशम्य तद्वचननिष्पन्नबोधोऽयं चन्द्रसिंहस्तस्य शिबिरं जगाम । तत्रामुना कलुषात्मना सम्यक् परिचर्यं संतोषितोऽयम् । अशनानन्तरं क्रूरसिंहचन्द्रसिंहौ मत्रिविदेव संघटितमिवेति मिथो हसन्तौ समालपताम् । होराभेकामालपतोस्तयोरकस्मात् कश्चित्पुरुषस्तत्र समागत्य शूरसिंहमिङ्गितेन बहिरागन्तुं समसूचयत् । तदीयमिङ्गितमवगम्य–' एषोऽहमागतः ' इति राजकुमारमभिधाय ततो बहिर्निर्गम्य शूरसिंहः केनचनागन्तुकमानवेन सङ्गतः । आगन्तुकोऽयममुमन्यस्य कस्यचन निकटं समनयत् । तमभिज्ञाय पृष्टवान् दुष्टहतकः ' किं वृत्तमुपनीतवान् ' ? इति । तेन महाराजश्रीविजयसिंहः स्वजाले पतित इति सुसमाचारोऽयं श्रावितः । विजयसिंहनृपतिं निजजाले पतितमुपश्रुत्य तत्कालमेवास्मदीयं मुख्यनायकं कालसिंहमाहूय क्रूरसिंहो बहुविधममुं सूचयित्वा विससर्ज ।

अथायं दुष्टो राजकुमारसमीपमागम्य तं गाढं निद्राणमद्राक्षीत् । दुरात्माऽसौ विश्वासघातं विधाय शायितस्य राजकुमारस्य हस्तौ लोहनिगडेन निगडितावकारयत् । तदनु नराधमोऽयं ततो निर्गत्य महाराजश्रीविजयसिंहसनीडे समुपसेदिवान् । महाराजस्य किं नु वृत्तमिति सम्पूर्णोऽयं वृत्तान्तो विदित एवात्रभवत्या इति निवेद्य कथयितुं नावश्यकता जागर्ति ।

---

१ विलोक्य । २ अनुकम्पा–दया । ३ सनीडे समीपे ।

अथ महाराजव्यापादनानन्तरमयं नराधमो महाराजमस्तकं कलेवरात् पृथक्कृत्य कुन्तप्रान्ते तत्समालम्ब्य तदीयमरणानन्दपुलकितहृदयो दुन्दुभिनादं कुर्वाणः शिविरान्तिकमागमत् । दुन्दुभिनादेन प्रबुध्यात्मानं निगडितमालोक्य— 'किमयं चण्डालो विश्वासघातं कृतवान् ? आः ! प्रतारितोऽस्मि नूनम्' इति विचिन्त्य भृशमत्यन्तक्रुधा राजकुमारः । अतोऽयं ततः समुत्थाय समीपचारिणं प्रहरिणं नियन्त्रितकराभ्यामेव निहत्य शूरसिंहं विचिन्वन् बहिराययौ । तस्मिन्नेव मिलितः शूरसिंहः । अनुचरकरालम्बितस्थूलप्रदीपप्रकाशे कुन्तप्रान्तनिवेशितं नरेन्द्रमस्तकमालोक्यैव राजनन्दनस्य नेत्रे विदीर्णे इव जाते । अथ घोरं संगर्ज्य लोहशृङ्खलां शकलीकृत्य मुष्टिकाभ्यां शूरसिंहं प्रहर्तुमभ्यधावच्चन्द्रसिंहः । ईदृशमद्भुतं राजकुमारपराक्रमं विलोक्य दुरात्माऽयं भयेन कम्पितुमारेभे । चन्द्रसिंहं स्वमस्तुलमभिधावमानं निरीक्ष्य नृशंसघातकोऽयं साहाय्यार्थं सैनिकानाह्वयत् । तदाक्रन्दनध्वनिना तदीयभटास्तत्राभिपत्य राजकुमारं पर्यवेष्टयन् । तेषु कतिपयानसौ निहतवान् राजकुमारः परमन्ते बहुषु शस्त्रपाणिषु निःशस्त्रोऽयमेकाकी किमिव कर्तुं पारयेत् ? अतिश्रान्तोऽयमन्ते चन्द्रसिंहः । सैनिका युगपदभिपत्यामुं निगृह्य निगडेन करचरणेषु दृढं निरबध्नन्त । अथामुं तदानीमेव सद्यो नीत्वा क्वापि गुप्तस्थले स्थापितवान् शूरसिंहः । श्रुतं किल मया— 'शूरसिंहोऽयं राजकुमारं चण्डिकायै निवेदयिष्यतीति' । पूज्यभगवति ! एतावदेव जानाम्यहं वृत्त' मिति प्रोच्य मौनव्रतमङ्गीकृतवान् ।

प्रभावती । हा हन्त ! मदीयतनयतुल्योऽयं चन्द्रोऽपि नराधमेनामुना निहनिष्यते किमु तदा ? हन्त ! किमिदानीं संवृत्येत ?

चन्द्रबलिदानं निशम्य कुमुदिनी भिया विह्वलीभूय मूर्छिताऽभवत् । तदीयामीदृशीं दशां समालोक्य राजमाताऽपि सम्भ्रान्तचित्ताऽभवत् । अमरसिंहः शीतलं जलं निषिच्य कुमुदिनीं प्रत्यागतचेतनामकार्षीत् ।

अथ सर्वैरितो मन्त्रिवरो बन्दीकृतमिदं पुरुषद्वयमप्राक्षीत्— 'कुत्र निरुद्धोऽयं नरेन्द्रकुमारः ?' इत्यवगम्यते किमु युवाभ्याम् ? ' इति । तौ प्रोचतुः— 'नावगम्यते खलु भगवन् ! अकस्मादमुं तस्यामेव निशि क्वापि नीतवानसौ । क्वायं नीत इति नावां जानीवः, ' इति ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ साहित्यसुधाभागद्वयसम्बन्धी कुमुदिनीचन्द्रे षष्ठी कला ॥ * ॥

---

१ मस्तके । २ उपहारीकरिष्यति । ३ मौनभावम् । ४ वृत्तः ।

# अथ सप्तमी कला ।



'परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥' (पञ्चतन्त्रके)
"शेते करी मदाकपाद्विपादिकायाम् ।" (स्फुटम्)
'व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते ।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥' (पञ्चतन्त्रके)

× निशीथकल्पा निशीथिनी । सर्वेऽपि मानवा गाढनिद्रापरतन्त्रा वर्तन्ते । पथिषु कस्यापि सञ्चारो न दृश्यते । केवलं भयदायिन्या रजन्यां रुदतां सारमेयाणां भीषणा रवा भयमिव वर्द्धयन्तितराम् । अतिविदूरतः कस्याश्चिन्नगरवीथिकायाः पर्यटतः प्रहरिणो 'जागृत भो जागृत । गाढोऽयमन्धकारः ।' इति साक्रोशं चीत्कुर्वतस्तारध्वनिरश्रूयत । ईदृशे समये प्रासादस्योपरितनगृहस्यैकस्मिन् कोणे निलीनाऽऽकृतिरेका तिष्ठति स्म ।

'क्वाऽयं स्थापितो राजकुमारः ?' इति प्रधानस्वरेण पुरुषयोर्बन्दीकृतयोस्तयोरन्तिममुत्तरं निशम्य तत्क्षणमेवाऽऽकृतिरियम्—'नानाव्यह तरस्यलम् ?' इति वदन्ती तत्र प्रविवेश । पोटलिकामेकां करे कलयन्ती विचित्रवैषम्यमाकृतिः सर्वेषां मध्ये समुपगम्य स्थितवती । तां विलोक्य सर्वेऽपि तत्रत्या जनाः कुतूहलपूर्णनयनास्सन्तः 'केयं भवेद् व्यक्तिः ?' इति विचाराम्बुनिधिवीचिमालायां प्रेङ्खोलितुं प्रवृत्ताः । अत्रान्तरे व्यक्तिमिमामभिज्ञाय समगादीत्कुमुदिनी— 'कोऽयम् ? वत्सले रणवीर किमु ?' इत्यभिधाय सहोदरं भगिनीव विकस्वरकुमुदिनीप्रफुल्लोल्लसल्लोललोचना प्रेमोत्कलिकाकल्लोलाविलीकृताखिलाङ्गी राजनन्दिनी कुमुदिनी रणवीरमालिङ्ग्य स्वपाणिनलिनयुगलं तदीयभुजशिरसि निधाय रोदितुमुपक्रान्तवती ।

विलपन्तीमिमामवलोक्य प्रोवाच रणवीरः— 'भ्रातृजाये ! समाश्वसिहि । किमिति विलप्यते भवत्या ? यदेव विधीयते विधात्रा तदात्मनीनमेवेति शोकं विजहातु भवती । मा भूवन् मनागपि व्याकुलाः सकला अपि भवन्तः । क्व निरुद्धोऽस्ति ममाग्रजो बन्धुरिति निशाम्यते मया ? तत्रोपगम्याहं निश्चितमेव स्वबन्धुं बन्धनालयाद् विमोच्य भवत्समक्षमानेष्यामि । ' इति शान्तिं कलयन्तु सर्वेऽपि भवन्तः ।' इति । रणवीरवचनं निशम्य विलपन्त्येव कुमुदिनी कथितवती— 'रणवीर ! किमिव कर्तुं शक्नुयाद् भवान् ? कुमारो भवान् खलु ! भवन्तमपि शत्रुर्निग्रहीष्यतीति न गण्यते भवता ? गन्तव्यश्चेद् सैन्यसहितं मन्त्रिवरं सह नीत्वा ममाग्रजन्मानं कारागृहाद्विमोच्य सत्वरमितो निवर्ततां भवान् । एका-

---

१ पिहितस्वरा विदलिता । २ उत्कलिका—उत्कण्ठा । ३ स्कन्धे ।

किन्तु भवन्तं नैवाहं कदापि प्रेषयेयम् । तत्र गम्यतामेकाकिना भवता । भवतु यद् भाव्यं प्राक्तनकर्मानुकूलम् ? ' इति ।

रणवीरः । प्रणयमुग्धे भ्रातृजाये ? किमिति न निःसार्यते स्वहृदयादीदृशो भयावहो विचारः ? क्षत्रियपुत्रोऽस्म्यहम् ? केसरिणः किशोरोऽयमहम् ! ! शक्तिरेव नास्ति शत्रोर्यदयं मां निगृह्णीयात् ? प्रजावति ? विदितमेव भवत्या यदहं तदीयकिङ्करो भूत्वा तदन्तिके निवसामि । तदखिलमेव तदीयं गोपनीयवृत्तान्तमभिजानाम्यहम् । नाहमासं महाराजमरणावसरे तत्रोपस्थितः । तदानीमहं तत्रोपास्थास्ये चेत्केनापि प्रकारेण कयाऽपि युक्त्या महाराजस्य प्राणानरक्षिष्यम् । तदधुना यद् भूतं तदभूतं नैव सम्पद्येत ? न पुनर्निवर्तेत शरासनेमुक्तो बाणः । इदानीन्तु केनाप्युपायेन मया विमोचनीयो निजाग्रजन्मा । भ्रातृजाये ? त्वं मां सैन्यं सह नेतुं कथयसि किन्तु दुरात्माऽयमीदृशे स्थले निवसति यत्प्रकाशं न शक्यते गन्तुम् । धीरानादाय कदाचित्प्रकटं गच्छेयञ्चेन्नृशंसोऽसौ विदितवृत्तान्तो ममाग्रजं द्रुतमेव निहन्यात् । तदधुना यन्मया विधेयं तदखिलं स्वयमेव प्रच्छन्नं करणीयम् । तत्र नैव शक्त्या अपितु युक्त्यैव कार्यम् ।

कुमुदिनी । रणवीर ? ततः किन्तु कर्तुं निरधारि भवता ? ।

रणवीरः । पश्य, येयं पोटलिका सहानीताऽस्ति मया तदभ्यन्तरे सकलं नेपथ्या[2]भरणमिदं रमणीरत्नानुगुणम् । तेनाकल्पेनात्मानं सम्यक्प्रच्छाद्य तद् भयङ्करस्थानमहं गमिष्यामि । दौवारिकगणं मधुरमधुरैर्ललितललितैर्नर्मवचनमयैः प्रियोपन्यासैर्वञ्चयित्वा मायाजालं विस्तार्य भ्रातरं विमोच्याविलम्बितमेव निवृत्य त्वां द्रष्टाऽस्मि ।

कुमुदिनीरणवीरयोर्मध्ये प्रवृत्तमालापमियदवधि सर्वेऽपि तत्रत्या जनाः शृण्वन्ति स्म । तस्य कुमारस्य नैपुण्यमयीं वार्तां निशम्य विस्मयान्वितमनसो भूत्वाऽमी— ' कुतोऽमुना कुमारेण समं कुमुदिन्याः परिचयः ? कश्चायं कुमारः ? ' इति विचिन्तयामासुः । अथ प्रधानमन्त्रिवर्येण— ' वीरकुमार ? त्वमात्मानमभिज्ञापयास्मान् निजनामधामनी निवेद्य ।' इत्यनुयुक्तः— ' प्रधानवर्य ? नाभिजानासि मामनवधानात् । परमहं भवन्तं सम्यक् परिचिनोमि ' इत्युदचारीद् रणवीरः । ' अपि मां परिचिनुषे त्वम् ? तत्कस्य तनयोऽसि ? ' इति साश्चर्यमनाप्तवर्येण पृष्टोऽयं रणवीरः— ' परलोकमलङ्कृतवतोऽजितदुर्गनगराधिपतेर्महाराजश्रीकेसरीसिंहस्य नष्टोऽहं कनिष्ठतनयः श्रीचन्द्रसिंहानुजोऽस्मि ' । इत्युक्त्वाऽऽत्मानं प्रकाशितवान् । ' को नु खलु ? मम कनिष्ठराजकुमारो वत्सो रणवीरसिंहः किन्तु ? ' इत्यभिधाय विस्मितमना रणवीराभिमुखं विलोकितवान् प्रधानवरः । अथ रणवीरमभिज्ञाय प्रमुदितहृदयः प्रतापसिंहः परमप्रेम्णा वक्षसा परिष्वजेऽमुम् । राजमहिषी धाम्प्रभाग्यवती जीवितं रणवीरं विलोक्यानन्दसान्द्रहृदया स्नेहेन स्वयमालिङ्गितवती । रणवीरो राजमहिषीनिकटमुपगम्य प्रणम्य

---

१ शरासनं धनुः । २ नेपथ्याभरणम्— वेशालङ्कारः । ' आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् । ' ' अलङ्कारस्त्वाभरणम् । ' इति चामरः । ' ३ नर्मवचनमयैः— हासचोदकम् ।

च सप्रश्रयं निषण्णवान्। राजमहिषी तदुत्तमाङ्गे स्वपाणिपङ्कजं निधायाशिषं तस्मै दत्तवती। अथ प्रभातकल्पायां विभावर्यामेव राजमहिषी मन्त्रिवर्यं चितारोहणसामग्रीसंभारं विधातुमादिशत्। प्रतापसिंहो राजमातरं पतिसहगमनबद्धानियमामनगम्यामितु खिन्न शोकमलिनवदनः सन् सेनापतिममरसिंहं चन्द्रवतीतीरे चन्दनकाष्ठैश्चितां विरचयितुमाज्ञप्तवान्। अतोऽमरसिंहश्चितार्थं सकलं संभारं कर्तुं प्रस्थितः। प्रतापसिंहः प्रगृहीतारिमौ पुरुषौ तदिच्छानुकूल्ममाश्वसै च प्रवेशितवान्। तावपि नृशंसस्य क्रूरसिंहस्य सकाशादात्मानं विमुक्तमवधार्य प्रमुदितान्तःकरणौ कटकमण्डले[1] प्रविष्टौ।

यथा यथोपसीदति प्रातःसन्ध्यासमयस्तथा तथा राजमहिष्याः प्रभावत्या दयितसहगमनाभिलाषोऽतितरामेधते। वपुरस्या वेपथुनाऽऽश्लिक्ष्टे। समाधिलीनान्तःकरणेवाजायतेयम्। इत्थमिदमालोक्य कुमुदिनीरणवीरौ विकम्पितुमुपक्रम्य मातरं प्रणम्य प्रोचतुः 'अम्ब! क्व गच्छसि परित्यज्यावाम्। निराश्रितौ भविष्याव आवाम्। कस्मै शरणाय समर्प्य नौ गम्यते जनन्या?' इति वदन्तौ तौ सुतरामाचक्रन्दतुः। उन्मील्य लोचनारविन्दे नरेन्द्रवल्लभा राजनन्दनयोस्तयोरभिमुखं विलोक्य विलपतोरुत्सङ्गे स्वहस्ताम्बुजयुगलं विन्यस्य निगदितवती–'वत्सौ[2] वत्सौ! किमिति युवामीदृशे मङ्गलमयप्रसङ्गे विलपतम्? निरवलम्बौ नैव भविष्यथः। अखिललोकपालकः परमकृपालुः परमेश्वरः प्रत्येकं पालयति जगतीह। तदेव तौ[3] निर्भयान्तःकरणौ भवन्तौ जगदेकशरणं परमगुरुं जगज्जीवनं जगदीश्वरं चिन्तयत निरन्तरं हृदि युवाम्' इति। अथ मन्त्रिवर्यं पृष्टवती राजमाता 'मन्त्रिमण[4]! कियान् विलम्बोऽधुना? महदन्तरं जायते मे स्वामिनः' इति।

मन्त्रिवरः। (सगद्गदकण्ठम्।) भगवति! सन्नद्धोऽस्ति सकलः संभारविधिः। केवलमत्रभवत्याः प्रस्थान एव विलम्बोऽस्ति।

तत्पश्चमेव सती देवी स्नानविधिमवसाय्य यावन्ति मण्डनानि धारयितुं शक्ता तावद्भिरलङ्कारैरात्मानं मण्डयामास। तदनु प्रधानतरो राजपुरोहितमाकारयितुं धोरभटं प्राहिणोत्। सञ्जातोऽथ प्रभातकालः। नगरनिवासिभिर्जनैरखिलाऽपि शर्वरी तैरनिद्रैरेवातिवाहिता। परलोकमलङ्कृतवतो वसुधालङ्कारनृपवरस्य निमित्तमखिला राजनगरी हाहाकाररवैः परिपूर्णा। ततोऽपि राजमाता सतीभवितेति निशम्य निखिलमपि प्रकृतिमण्डलमतितरां व्याकुलमालोक्यते। नारीणां नराणाञ्च परःशतानि मण्डलानि सतीं राजमातरं चरमं विलोकितुं तरङ्गिणीतीरं व्रजन्ति।

कियन्मुहूर्तानन्तरमुपस्थाय राजपुरोहितः प्रासादे निर्वर्तनीयां राजमातुर्निखिलां क्रियां सम्पादयामास। अनन्तरमेकस्मिन् काञ्चनभाजने महाराजमस्तकं संस्थाप्य राजमाता तत्क्रोडपात्रमादाय शिबिकामारुह्य चन्द्रवतीतीरं समुपागता। समयेऽस्मिन् प्रतापसिंहामरसिंहकुमुदिनीरणवीरप्रभृतयोऽतितरां विलेपुः। चन्द्रवतीतीरमुपगम्य सुखपालिकाया[5] अवतीर्णवती सती देवी। सकलैस्तदानीम्–'जय देवि! जय मातः! जय भगवति' इति

1 शिबिरमण्डले। 2 वत्सौ: शिशवः। 3 पुत्रौ। 4 अमात्य। 5 सुखपालिका शिबिका।

जयनादैः संभाविता सती माता। जयघोषमुपश्रुत्य राजमातापि 'जय भगवति! जय देवि!' इत्युच्चैरुच्चारितवती।

पूर्वत एव सेनापतिनाऽमरसिंहेन चितायाः सकलोऽपि संभारः कृतोऽभूत्। पणवानकझर्झरमर्दलमृदङ्गादिवाद्यान्यपि तत्रोपस्थापितानि। चन्दनतुलसीपिप्पलपलाशप्रमुखैरिन्धनैर्विनिर्मिता समचतुष्कोणैका चिता, तदुपरि स्थापिता दारुमयी चतुष्किकैका। वामारोहमार्गमेकं कृत्वा परितः सुखज्वलनीयैः शुष्कतृणपलाशपर्णसमिच्चयैराच्छादिता चिता। चन्द्रवतीतीरं प्राप्यानन्दितेवावलोक्यते राजमाता। तस्या मुखमण्डलं मनागपि न कलयति शोककलङ्कलेशम्। मरणमासन्नं विभाव्यापि नाकुलमस्या मनः। हृदयेश्वरचरणान्तिकं गन्तुमत्यन्तमातुरेव संजाता राजमाता। चन्द्रवतीतरङ्गिणीनीरे मज्जनविधिं विधायार्द्रवसनैव राजमाता चितायाः अभ्यर्णमुपेत्य हस्तमुद्यम्य सर्वानाशीर्वचनेनानुगृहीतवती। अथ कुमुदिनीरणवीरौ प्रतापसिंहाय समर्पितौ तया राजवल्लभया।

सजलनयनो वृद्धमन्त्रिवरः- 'शिरसा वहामि देवीनिदेशमालाम्'। इत्यभिधाय सतीं राजमातरं प्रणनाम। सती माता तस्मै प्रदायाशिषं बाष्पजलविमोचनान्निवार्य परमेशस्मरणं कर्तुं सूचितवती। अमरसिंहप्रमुखैः राजसेवकैर्मातुराशिषः सम्प्राप्ताः। अथ सती देवी कुमुदिनीरणवीरौ स्वाभ्याशमाह्वयत्। तत्क्षणमुभौ साश्रुनयनौ समुपगतौ। रुदन्तौ तौ निवार्य जगाद सती देवी- 'मदीयवत्सकबालकौ! मा रुदतम्। शान्त्या शृणुतं ममोपदेशम्। 'वत्स रणवीर! सदा सन्मार्गमनुतिष्ठ संसारे। कियत्यपि व्यसने मापयाहि न्यायपथात्। सर्वदा पूजनीयगुरुमातृजनस्य पालय निदेशम्। कस्यापि दुःखजनकं न कुरु कार्यं किमपि कदापि। धर्मं रक्षानवरतम्। प्राणान्तेऽपि मा विजहिहि दयाधर्मौ। विपत्तिकाले सकललोकनियन्तुः परमपरमेश्वरस्य सकाशात्साहाय्यं याचेथाः। विश्वसिहि एवं परमानन्दकन्दपरमब्रह्मणि। सदा त्वं वैदिकधर्मरक्षायत्तो भव। कदापि धर्मान्न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। देवपितृकार्याभ्यां कदापि नोदासितव्यम्। इन्द्ररुद्रवरुणब्रह्ममहेश्वरादयः सर्वेऽपि परब्रह्मपर्यायवाचका अमी परमपदपरमात्मानमेव तत्तद्गुणैः प्रत्याययन्ति। तदमुं सर्वान्तर्यामिनमद्वितीयं जगदीश्वरं एकमनसा समुपासिष्यसे चेद्दुस्तरमिमं संसारसमुद्रं प्रतीर्य सदानन्दघनं परमेश्वरसंज्ञकं ब्रह्मपदं प्राप्स्यसि त्वम्। रणवीर! बालकोऽसि त्वमिदानीम्। आगामिनि काले महान्ति *कृत्यानि करणीयानि त्वया। जगदीश्वरस्ते श्रेयांसि विदधातुतराम्। स्वराज्यं सुखितं* करोतु।' इति समुपदिश्य राजमाता मङ्गलमयेनाशीर्वचनेन रणवीरं संवर्धितवती। सोऽपि प्रणम्य सादरं राजमातुराशीर्वचनं स्वीचकार।

अथ कुमुदिनीमुद्दिश्य सदुपदेशमिमं कृतवती सती देवी- 'वत्से कुमुदिनि! त्वं बुद्धिमती सद्गुणवती चासि। न किमप्युपदेष्टव्यं ते। परमन्तिममिमं मदुपदेशं शृणु- 'स्त्रीणां पतिरेव देवः। सततं पतिसेवने मनो निधेयम्। पत्युः सुखे सुखं दुःखे दुःखं विभाव्य-

मिति नारीणां भूषणमिदम्। प्राणान्तेऽपि रक्षणीयं निजशीलं सहधर्मिण्या। कदापि हृदयवल्लभनिदेशो नैवोल्लङ्घनीय। मनोवाक्कायैरविरतं स्वहृदयेश्वरः परिचर्यो धर्मपत्न्या। वत्से कुमुदिनि ? कस्यापि संशयापादिकां वार्तामाकर्ण्याविमृश्यकारिणी भूत्वा न जातु त्वं तुदया निजप्राणवल्लभम्। विचित्रमिदं संसारेन्द्रजालम् ? ? अभमत्ता तिष्ठानारतं दुर्जनत.। सम्पदि हर्षो विपदि विषादः स्वाभ्युदये गर्वश्चापि न करणीयः कदापि त्वया। वत्से ? भद्रं तनोतु ते भगवान् जगदीश्वरः।' इत्याख्याय कुमुदिनीं गाढं वक्षसा परिष्वज्य राजमाताऽऽशिर्षमदात्।

अथ विसृज्य कुमुदिनीमन्तर्निध्याय सर्वान्तर्यामिनं परमात्मानमभ्यर्थयाञ्चक्रे महादेवी–'हे सर्वसाक्षिसर्वव्यापिसर्वशक्तिमन् परमेश्वर ? विष्वग् व्याप्तमिदं त्वदीयं तेजः। त्वामेव भान्तमनुभान्ति सर्वाणि तेजसां मण्डलानि। त्वमेव सकलजगन्नियन्ता सर्वान्तर्यामी सृष्टिकर्ता विभु प्रभुरसि। त्वमेवाखिलसर्गस्थप्राणिनां पश्यसि पापपुण्ये निपुणमनारतम्। तदपि दयालुदेव ? निजानुकम्पालवेन मदीयदुरितानि स्वतेजःपुञ्जे भस्मसात्कृत्वा पवित्रां कुरु माम्। अयि जगज्जनक ? शरणमुपैमि ते सम्प्रति। क्षम्यतामियमपराधिनी बाला।' इत्थमभ्यर्थ्य परमकारुणिकं जगदीश्वरमिव देवी प्रदक्षिणीकृत्य चिताग्निदेवं सर्वाणि स्वाङ्गाद्यवतार्य निजालङ्करणानि विप्रेभ्यो निराश्रितजनेभ्यश्च वितीर्णवती। अन्तःकरणमिदानीमस्याः संसाराच्चितान्तं विरक्तम्। नेत्रे चातितेजःशालिनी विलोक्येते।

साम्प्रतमरुणरागरञ्जिता पुरन्दरदिक्सुन्दरी। प्रफुल्लपुष्पस्तबकसुन्दरहस्तारविन्दा विहङ्गममञ्जुलगानमुखरमुखाम्बुजा रुचिरारुणाम्बरधारिणी मनोहारिणीयमुषादेवी सतीं राजमातृदेवीमर्चयितुमिव पुरन्दरहरिति विरेजे। मालतीयूथिकातिमुक्तकलतादिकुसुमसुगन्धवाही चन्द्रवतीतरङ्गसम्पर्कशीतलः स्वामिप्रायेयमात्मकलेवरमपोविष्यतीति सर्वां महादेवीमानन्दयन्निव मन्दं मन्दं वहति स निशान्तवायुः। स्वनरेन्द्रप्रियेयमितो मां परिहाय परलोकं प्रस्थातुकामेव चिरपरिचितं चन्द्रवतीनदीजलमपि निश्चलमिव बभासे। समयेऽस्मिन् काञ्चनभाजनादादाय निजदयितमस्तकमात्मवक्षसा समासज्य सती देवी चितायां उपरि निहितां चतुष्किकामारुरोह। उपाविशच्चात्मन उत्सङ्गे निजजीवनसहितं चरमाङ्गं निधाय नयने निमील्य परमेश्वरं हृदि चिन्तयन्ती। अथ राजपुरोधा घृतधारया चिताग्निमुद्दीप्य यथाविधि हुताशनं हव्यकव्यद्रव्यैः सर्पिषा च, संतर्प्य मन्त्रैर्हुतवान्। सहसैव प्रज्वालतरां ज्वलन। तत्क्षणमेव पणवानकमृदङ्गमर्दलशङ्खसंरम्भमुखानि वाद्यानि वादितानि। वादित्रनादैः समं तारस्वरेण 'जय भगवति ? जय देवि ? जय सति मातः ! ' इति ध्वनिभिरखिला जना दिगन्तरं बधिरितमकार्षुः। चतुष्किकाशिरसि स्थापितानि सकलकलाध्वनिध्वनितदिगन्तराणि लोकान्तरगामिन्या राजजनन्यास्तेजसा धर्षितानीव दन्दह्यमानानि नीचैरपतन्

१ स्तबको गुच्छकः। २ मुखरो वाचाल। ३ पूर्वदिशायाम्। ४ प्रभातपवनः। ५ सौवर्णपात्रात्। ६ घृतेन।

काष्ठानि । किमिव वर्णयितुं पारयेदियं निर्मललेखनी दृश्यमिदं तत्कालीनम् ? ? अहह ! नरेन्द्रवल्लभायाः पेशलं नवनीतकोमलं वपुः पश्यतामेव विशेषां समिद्भिः समं प्रज्वलितम् । क्षणेनैव भगवत्याः माया चिनश्वरं पार्थिवशरीरं हुतभुजे समर्प्य कुत्रचिदगम्यरम्यस्थले मोदीना । चितायाः प्रचण्डज्वालामाला गगनं चुचुम्बुः । दृश्यमिदमवलोक्य प्रतापसिंहामरसिंहकुमुदिनीरणवीरादयः पाषाणचित्रिता एव विलेपुः । साम्प्रतमपि सर्वेऽपि पौरजना उद्विग्नहृदयास्तत्रैवासन् । क्षणादेव जाज्वल्यमानाभिश्चिताज्वलनज्वालाभिः प्रभावतीदेवीशरीरं प्रज्वाल्य भस्मसात्कृतम् । अथ शान्तोऽजनि कृशानुः । केवलं महानेको भस्मनां राशिरवशिष्टस्तत्र । कुमुदिनी रणवीरः प्रतापसिंहोऽमरसिंहश्चान्येऽपि सर्वे राजपुरुषा भग्नहृदया नगरं प्रति निवृत्ताः । भगवानम्बरमणिरिदानीं मनागम्बरतलमारूढवान् । राजमातुः सतीभवनानन्तरं राजमहालयोऽयं श्मशानमिव भासते स्म कुमुदिन्याः । स्मारं स्मारमिमं मातरं कुमुदिनी निरन्तरमश्रुजलं मुञ्चति स्म । तां शमपदैर्वचनैराश्वासयामास रणवीरः । अथ प्रतापसिंहरणवीराभ्यां सहालपन्ती स्थिता कुमुदिनी । भालारेत्येव मदनादनसमयः संवृत्त इति रणवीर उत्थाय जगाद कुमुदिनीम् 'आर्यजाये ? अनुजानीहि मामधुना । ( प्रधानं प्रति ) मन्त्रिमणे ? आश्वासयतु शान्तवचनैमाम् । आवरमहं विमोप्याल्पकालेनैव निवर्तिष्ये ' इति । कुमुदिन्या तु– ' गच्छ रणवीर ? सपदि निवर्तस्व मङ्गलकर्म सम्पाद्य । सकलनायकः पालयतु भवन्तम् । याहि कृतार्थो भूत्वा पुनरायाहि द्रुतम् ' इत्यनुमोदितः ' आर्यजाये ? एषोऽहं यामि तवाशीर्भिः संभावित ' इति निगद्याभिवन्द्याखिलान्निर्ययौ रणवीरः ।

भगवद्भाविनो गुप्तगृहस्य मध्यभागे–एकस्मिन् भागे सुन्दरमौचविनिर्मितमेकं महासदनमविद्यत । तत्परिवर्ती कृष्णशाणनिबद्धो द्वार एकः कोष्ठोऽवर्तत । तदभ्यन्तरे गन्तुमश्मसारदण्डजालिकाजटितमर्धचन्द्राकृतिसुन्दरं द्वारमेकमभूत् । निशान्तस्यास्यैकस्मिन् कोष्ठे राजकुमारश्चन्द्रसिंहो निरुद्धोऽभवत् । चन्द्रसिंहस्य हस्तपादं दृढकालायसशृङ्खलानियन्त्रितमासीत् । ' बन्धनादस्मात्कदाहं निःसरेयम् ? ' इति चिन्ताकुल एवायमगणयत् कष्टमिदमवस्थितो वीरवरः कथं कथमपि पर्यटति स्म । यत्रायं स्थापितस्तदीयकोष्ठद्वारकपाटे लम्बमानदार्वर्धविष्कम्भकम् । तदलिन्दे विकोषकृपाणकरौ द्वौ प्रहरिणौ नियुक्तौ । अभीक्ष्णमिमौ बन्दीकृतं चन्द्रसिंहं निरैक्षेताम् । चन्द्रसिंहोऽपि नास्ति कोऽप्युपायो बहिरपसरणस्येति विचिन्त्य दुःखितहृदयः पर्यङ्क एव मनसाऽऽकथत्– ' किं मयान्ते दारिद्र्येणैव मृत्युनैव मरिष्यते ! हा हन्त ! किं तदा नैव निर्यातयिष्यामि पितृश्वशुरयोर्वैरम् ! वत्स रणवीर ! प्रिये कुमुदिनि ! प्रामपि नैव द्रक्ष्यामि अन्तिमसमये । हा ! मदर्थं भवद्भ्यां कियदाक्रन्दितं भवेत् ! किमिदानीं करोमि ! किमन्ते मया स्वमर्यादां परिहाय विश्वासघातिनोऽस्य धूर्तस्य क्रू-

१ मध्ये । २ अग्निः । ३ प्रभा पाषाणः । ४ लोहदण्डजालम् । ५ मन्दिरस्य । ६ लोहतालकम् । ७ अलिन्दे कोष्ठाद्बहिर्भागे ।

सिंहस्य सकाशे आत्ममोचनाय प्रार्थना विधेया ? ' इत्याकलय्य विचाराम्बुधौ निलीनः । नाराचोदन्ते वीरपुरपोऽथ स्वक्रोधावेगं नियन्तुमिति सहसैव सावेशमभाषत– ' नैव नैव । कदापि नेदं सम्भाव्यते ? अतितरामसम्भवनीयमिदम् ? अपि पश्चाद्दिशि समुदियाद् दिनमणिः, अपि पुण्डरीकमण्डलमण्डितमम्बरतलमालोक्येत, अपि शीतलतां परिजह्यादपि चन्द्रमाः, अपि निजगुणं त्यजेदनलः, अपि प्रयान्तु प्राणाः प्रकामामिदानीमेव मदीयाः परमात्मप्रतिज्ञोल्लङ्घनं नैव कुर्यादयं चन्द्रः ? अहह ? ईदृक् क्लीबानुगुणोऽथ विचारोऽपि कथमुद्भवति मम मानसे ? प्रभो ? आजितदुर्गराजकुमारस्य किमियं दशा ? कदापि जम्बुकेन विजितः किमु केसरी ? अजितदुर्गयुवराजः कस्यापि निजवैरिणोऽग्रतो नम्रमौलिर्जात इति कदापि श्रुतं किल केनापि ? हन्त ? इयं मे दशा सम्प्रति ? किमिदानीं मया विधेयम् ? अये ? अहमपि कियान् मूढो यदहं स्वमरणार्थिनि विश्वस्य तदीयवाग्जालप्रवचनैर्वञ्चितः सुखमस्थिषि । हन्त । स्वमूर्खतयैवाहं बन्दीकृतः शत्रुणा । अरेरे नराधम विश्रम्भघातिन् नृशंस क्रूरसिंह ? सन्निहितमेव ते मरणं सम्प्रति । दुरात्मन् ? कदाचिद् गृह्णीयाः मदीयप्राणांस्त्वं मुत सपीडय मा हन्याः यदि तर्हि जगदीश्वरस्त्वय स्वदुरितकर्मणः फलं दास्यत्येव ते । शास्त्रेऽपि विश्वासघातस्य महापातकमघर्णि । तथापि नराधममीदृशं किमिति जीवयति सतां शङ्कर शङ्करोऽयम् ? अयि कारुणिकप्रभो ? अधुना तु [2]दुर्गतमेनमनुगृहाण निजकरुणावलोकनैः । हन्त । इयं मे दशा नु ? रे विश्रम्भघातिन् ? पूर्णोऽथ तव पापकलशः साम्प्रतमिति जानीहि । अयि यमराज ? सद्य एवापहरतु भवानस्य दुरात्मनः प्राणान् । अयि दिवाकर ? भस्मीकरोतु भवानेन विश्वासघातिनं स्वप्रचण्डतापानलेन । वसुन्धरापि न सोढुमलं भारमीदृशो नृशंसस्य ? ' इत्थं यदब्रवीत्तावद् यावत्स्पंदति चन्द्रसिंहस्तावदेवा क्लिन्नभुवमुपासरत्क्रूरसिंहः । कारालये निरुद्धस्य शून्य पृष्ट्वा प्रहरिणमसौ स्वसमक्षमिममानेतुमादिष्टवान् । ' यथादिशति प्रभु ' रित्युदीर्य प्रहरी कुञ्चिकया विष्कम्भकमुद्घाट्य प्रविश्याभ्यन्तरे चन्द्रसिंहमादाय बहिरागमत् । निगडितकरचरणत्वाच्चलितुमशक्नुवन्नपि चन्द्रः प्रहरिणा सम शनैः शनैः क्रूरसमीपमागम्य तदुपरि न्यक्कारमयीं दृशं निक्षिप्यैकतस्तस्थौ । ईदृगवस्थं चन्द्रं विलोक्य साट्टहासमहसत्क्रूरः । परतो मन्दस्वरमगादीदसौ– ' अयि सौख्यं कलयसि कारालये ? मूढ क्षत्रियडिम्भ ? अपि दृष्टं कीदृक् फलमुपनतमात्मोत्फुल्लकताश्च्यता ? नाप्यास्ति सम्प्रति विकरालकालवदनदर्शनात्ते ? ' इति ।

चन्द्रः । ( सामर्षम् । ) रे नीच ? चन्द्रोऽयं मृत्योर्बिभेतीति नावगम्य त्वया ? नृशंस नपुंसक ? नायं बन्धनालयो मे किन्तु रङ्गमहालयोऽयम् । नेयं लोहशृङ्खलिका अपितु सुवर्णालङ्कारोऽयं मे । अपगच्छ नराधम ?

क्रूरः । एवम् ? पश्यामि कमभ्यर्थयसे दयार्थमतस्त्वम् ।

चन्द्रः । अपि शूलमारोहेदयं चन्द्रः परं कमपि करुणं नैवाभ्यर्थयेत ?

१ नरामरतः । २ दुरवस्थम् । ३ गालिकया । ४ तालकम् ।

क्रूरः । दुराग्रहग्रहिल ! निग्रोद्दण्डतयैवेयमुपपन्ना ते दशा ।

चन्द्रः । मा मैवम् ! त्वादृशि नृशंसे विश्वासेनैव दशेयमुपनता ।

क्रूरः । मूढ ! अपि जानासि किं मजल्पसीति ? रे पिशाच ! तिरस्करोषि किमु वीरवरं क्रूरसिंहमिमम् !

चन्द्रः । अहह ! कोऽसि ? वीरवरः किमु त्वम् ? नैव नैव । त्वं तु कश्चित्पुंसको भीरुरसि । वीरवरास्तु रणाङ्गनभूमौ युद्धक्रीडया वैरं प्रतिकुर्वते परं त्वं तु क्लीब इव मूषकं निग्रहीतुं मार्जारो यथा निलीय तिष्ठति तद्वन्निलीय तिष्ठसि ।

' एवं चेदनुसर सम्प्रति यमपुरीम् ' इति निगद्य क्रुधा कृपाणमाकृष्य क्रूरसिंहश्चन्द्रसिंहं निहन्तुमभ्यगमत् । चन्द्रोऽपि सकलमात्मबलमेकीकृत्य तदभिमुखो बभूव । उपद्रुतोऽयं मध्यस्थेन प्रहरिणा । क्षणं शान्तिमाकलय्य क्रूरसिंह पुनर्निजासनं भेजे । वीरवरश्चन्द्रस्तरसा सम्मुखमापातः खलु परं प्रहरिकराघातेन निगडभारेण चावनिमध्ये निपातितः कथं कथमपि समुत्थितवान् । साम्प्रतमस्य नेत्रे बाष्पजलपूर्णे संजाते । आकाशाभिमुखमवलोक्यायमवादीत्- ' हन्त ! नाहमशासिषं खलु महाराजकेसरिसिंहस्य युवराजपुत्रेण चण्डालस्येदृशि वचांसि श्रोतव्यानि भविष्यन्तीति ! अयि सकलमङ्गलजगन्नायक ! निनाश्यतामिदं मे वपुः । नाहं सोढुमलं सम्प्रति कटुवचनानीदृशानि !' इति प्रोच्यावाङ्मुखः स्थितवान् । अथामुं प्रोक्तवान् क्रूरः-- ' चन्द्र ! आत्मानं मोचयितुं वाञ्छसि चेदस्त्येक एव मार्गः स्वमोचनस्य । '

चन्द्रः । को नु खलु मार्गः ? ।

क्रूरः । शृणु-जानास्येव खलु त्वं कुमुदिनीमहं कामये इति । नाभविष्यस्त्वं मध्यस्थश्चेदद्यैव चन्द्रमुखीमिमामुपलब्धुं भाग्यशाली समभविष्यमहम् । इदानीमियं सुन्दरी त्वदायत्ता विद्यते तामहं कामये । तद् यद्येककोशे न तिष्ठति कृपाणद्वयं तद्वदेव सुन्दरीमेकां कामयमानौ द्वौ नरौ नैवाप्नोति तयोः कोऽप्यन्यतरः सुखम् । इति वृत्तान्तमवगम्य विमृश्य च तां सुन्दरीं मदायत्तां विधास्यसि चेत्तदाहं मोचयामि कारायाः ?

चन्द्रः । ( क्रुधा संतप्यमानः ) अलमलं प्रलप्य रे अधम ! तूष्णीमेधि । इति ब्रुवाणश्चन्द्रः क्रूरं हन्तुमभ्यधावत् । किन्तु निवारितोऽयं प्रहरिणा । चन्द्रं स्वं हन्तुं समायान्तं विलोक्य क्रूरः प्रोवाच- ' रे बन्धनागारे निबद्धोऽसि, मदीयपाणिपञ्जरे च पतितोऽसि, तथापि त्वमीदृशमौद्धत्यं कुरुषे ! अद्यापि न नम्रीभवसि किमु ! ।

चन्द्रः । नम्रीभवाम्यहम् ? ।

क्रूरः । आम् । नम्रीभव ।

चन्द्रः । शृणु रे मूढ शृणु-

' घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।

---

१ नम्रीभव ।

दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते ह्युत्तमानाम् ॥ '

क्रूर । हा एवं किमु ? चन्द्रसिंह ? न दृष्टस्त्वया ? क्रूरसिंहस्य कृपाणप्रहारोऽद्यावधि नैवानुभूतस्त्वया सम्यगित्येव प्रफुल्लोऽसि दर्पेण, पुलकितोऽसि हृदि हर्षेण ? भवतु ? अधुना तु समाखेटो मे ? पश्याम्यहं कस्त्वा रक्षितेति ? ।

चन्द्र । को रक्षिता ? साक्षान्महामहनीयः परमेश्वरो रक्षिता [redacted] ?

क्रूर । परमेश्वरः ? अस्त्येष कुत्र परमेश्वर ? अपि जानीषे त्वं क्रूरसिंहोऽयं चतुरर्णवमेखलामखिलामिलामपि निर्धूनयेत् ? वीरधुरन्धराणां हृदयान्यपि कम्पयितुं प्रभुरस्ति । तत्कियन्मात्रस्तव प्रभुः ? ।

चन्द्र. । पापिष्ठ ? मा कार्षीर्निखिलजगन्नियन्तुर्जगदीश्वरस्यापमानं मा कार्षीः । किञ्चिन्न्यूनं परिपूरय पापकलशम् । ईदृशि घोराणि तव दुरितानि समुल्लिख्यन्ते दयालुदेवस्य न्यायालये । मरणानन्तरं पापपुण्यकर्मणां फलमनिमानि विधीयन्त इति सत्यमवेहि ।

क्रूरः । नायं वीराग्रगण्यो गणयति पापपुण्ये । स्वच्छन्दमानन्दविलासोपभोगसाधनं हि जीवनम् ।

चन्द्रः । अरेरे किल्बिषकर्मकारिन् क्रूर ? नेदमानन्दविलासोपभोगसाधनमपितु पापपुण्यपरीक्षणस्थलमेव जीवनमिदम् । विमृश रे नरककीटक ? विमृश । विनश्वरमिदं पार्थिवशरीरमवश्यमेकदा विनङ्क्ष्यति ते । नरकयोनिञ्चावाप्स्यसि त्वम् । नैव घोरं शक्ष्यसि नारकीयदुःखं विसोढुं त्वमिति अतःप्रभृत्येव विमृश्य कुरु पश्चात्तापमात्मकृतपापकर्मणाम् । अनुतापाश्रुजलेन क्षालितं भवति पापं भवति चान्ते कल्याणमेव नृणाम् ।

क्रूरः । समीचीनम् ? करिष्याम्यहम् ? किन्तु राजकुमार ? अतिमात्रमपमानितोऽहमद्य त्वयेति तत्फलं सत्वरमेवाधुना त्वां रसयिष्यामि ? ।

चन्द्रः । किन्तु रसयितासि त्वम् ? अरेरे अभिमानमदिरापानमदोन्मत्त मदान्ध ? कियन्मात्रा शक्तिस्तव वराकस्य ? ।

क्रूरः । कोऽहमिति सद्य एव ज्ञास्यसि त्वम् । इदानीन्तु त्वमल्पकालमेव जगतोऽतिथिरसि । प्रयास्यसि द्वयोर्दण्डयोरन्तरे तव प्राणाः परलोकम् । तदानीमेव शान्तिर्मे भविता स्वान्ते । आः ? तदानीमेव प्रिया मे कुमुदिनी प्राप्स्यते ? । ( इत्युदीर्यासौ जहास ) ।

चन्द्रः । किन्तु हससि मृगेन्द्रं बन्दीकृत्य ? क्षत्रियपुत्रोऽसि चेदेकवारं विमुच्य पश्य मे पराक्रमम् । किन्तु क्षत्रियपुत्र एव नासि त्वम् ? त्वं तु षण्ढिनपुंसकोऽसि ?

स्वोरश्चाभाकर्ण्य कोपारुणवदनः संवृत्तः क्रूरसिंहः । चन्द्रं हन्तुं चेद्व्यवस्यत्स तदा एव पुनासुं हन्तुं शक्नुयात् । यतोऽयमिदानीं सुसज्जितशस्त्रपाणिरासीत् । आसीच्चायमसंगृह्यखङ्ग-

---

१ इला पृथ्वी । २ प्रकम्पयेत् । ३ विनाशशीलम् । ४ अनुतापः पश्चात्तापः । ५ अवशा शयमानः ।

नियन्त्रितश्चन्द्रसिंहः। किन्तु नाभून्मनसि क्रूरस्य चन्द्रं निहन्तुमभिलाषस्तदानीम्। आसी-च्चास्य मनसि दारुणविधया चन्द्रं निहत्य चण्डिकायै उपहारीकर्तुम्। अत एवास्मिन्समये निजमपमानं सहमानो निषण्णोऽभवत्क्रूरः। अथाथमादिशत्प्रहरिणं चन्द्रं कारायां निरोद्धुम्। प्रहरिणा निरुद्धोऽयं चन्द्रः कारालये। तदनु प्रहरिभटद्वयं निपुणमुपरक्षितुमादिश्य ततो निर्जगाम क्रूरः। गच्छत एवास्य हृदये कुमुदिनीसम्बन्धिनो विचाराः प्रादुरभूवन्। मनसा चैवमालपदसौ– 'कुमुदिनि ? विशितोऽहं कुतस्त्वया ननु ? चन्द्रमुखि ? कदाहं त्वामुपलभ्य भाग्यशाली भवेयम् ? तव विरहेणाहं विमूढो जातः। दन्दह्यते हृदयमिदं मदीयं तव वियोगानलेन। प्रेमरसिके ! एहि एहि। मा वर्धयाधिकं माम्। प्रिये कुमुदिनि ? यद्यपि मां न्यक्कुरुषे त्वं तदपि त्वामहं सम्यक्तदाऽभिलषामि। त्वदर्थमयं क्रूरसिंहः सकलं तनुमनोधन-मर्पयितुं सन्नद्धोऽस्ति। कुमुदिनि ? न जातु मामङ्गीकुर्यास्त्वं परं नायं विमुञ्चति त्वाम्। त्वामुपलभ्यैवाहं शान्तिमन्तः कलयिष्यामि। (विमृश्य।) समागतोऽयं सायंसमयः सम्प्रति। तदेहि साम्प्रतमेव विजयनगरं प्रयामि। नास्ति कोऽपि तत्रेदानीमिति कुमुदिन्या-मपहरणे नैव भविता मे कोऽप्यन्तरायः। गच्छत एव मम वर्त्मनि रजनिरपस्थास्यतीति सौकर्यं जनिता मे। निशीथे कुमुदिनीमहालये प्रविश्य तां सुन्दरीं विविधयुक्त्या समादाय सत्वरं परावर्तिष्ये। नावश्यको मे सम्प्रति कोऽपि सहचरः। तत्कार्यमसहायः एवाहं सुगम-तया कर्तुं प्रभविष्यामि। इत्थं मानसे निश्चित्य क्रूरसिंहोऽयं विजयनगरवर्त्मना गन्तुं प्रचक्रमे। सायमेनायं गच्छन्महारण्यपल्लीनिजालये निलिल्ये।

इतस्तु कुमुदिनीमाहृत्याय निर्गतो रणवीरो मध्यन्दिने क्रूरसिंहशिबिरमण्डलमासमाद। तत्रानुसंदधता रणवीरेण– 'क्रूरो बन्धनालये बन्दीकृतपार्श्वे गतवानिति' विदितम्। क्रूरसिंह-सैनिका इमं पर्यचिन्वन्निति परिवृत्य तदान्तिकमुपनिश्य समपृच्छन्– 'रणवीर ? [redacted] गतोऽभव-द्विपान्धि दिनानि ?' इति। चतुररणवीरेण प्रत्येकं तत्तत्प्रश्नोचितं सम्यगुत्तार्य संतोषिता. सर्वे-ऽपि। प्रयाम्सौ किङ्करैणैकेनैकस्मिन्हद्युपात्रे मृद्वीकादिमधुररसफलानि समानीय रणवीरामग्रो निधाय दै. समं शीतलं विमलं जलमपि निदधे। आसीद्यतिमात्रमयं तान्तायितोऽथमिति सोऽपि भुक्त्वा फलानि निपीय चामलं जलं श्रमापनोदाय मुहूर्तमयमशयिष्ट।

सर्वेऽपि सैनिकास्ततः क्रूरसिंहपाषाणगतस्य रणवीरस्य सम्मुखं स्थित्वा निराविश्य प्रलपः 'को निदेशः श्रीमताम् ?' इत्यमुं पृष्टवन्तः। तान्निलालपि ततो गन्तुमादिष्टवान् रणवीरः। इति ते क्रमशः प्रणम्य प्रस्थिताः। ययानेतु सुखं सुप्त्वा रणवीरः। अथास्य सायन्तनसमये निद्रां विहाय समुत्थाय समन्ततो निभाल्लितवानयम्। परं न ददृशे कोऽपि तत्रात्मना। ततः प्रयमः सप्रतिदूरवर्ति दृश्यमानं कुटीरमयं ययौ। संवृतमभूत्कुटीरद्वारमिति कपाटं तानैरा-हत्य रणवीरः ', मानामिह ?' इति मन्दस्वरमाकारितवान्। 'कुटीराभ्यन्तरात्–' कोऽयम् ?' इति पृष्टोऽयम्– 'एषोऽस्मि रणवीरः' इति समुत्तारीत्। तत्क्षणमेव द्वारमपावृतं तेन।

---

१ विरहरेपि। २ विन्धोऽन्तरायः प्रत्यूह.। ३ एकाकी। ४ तदारम्भस्थानम्। ५ बुभुक्षितः।

अन्तःप्रविष्टश्चायं रणवीरः ।

एतत्कुटीरनिवासी परमसुहृदमून्मानसिंहोऽयं रणवीरस्य । पञ्चवर्षेणाधिकोऽयं वयसा रणवीरात् । एष बान्धवः क्रूरसिंहस्य । परं तदीयानुत्तमगुणान् निर्वर्ण्य तेन सार्कं सौहार्दमकार्षीद् रणधीरः । परस्परमुपाचीयतानयोर्मैत्री । रणवीरार्थं स्वप्राणानपि विश्राणयितुं सन्नोऽभवन्मानसिंह । अन्तः प्रविष्टमेव रणवीरं पृष्टवान् मानसिंह 'रणधीर ? कुतस्तवागमनमकस्मादिदानीमिति ।'

रणवीर । विना प्रयोजनं कश्चिदागच्छति किमु ? भ्रातर्मानसिंह ? अस्ति प्रयोजनं त्वया सममद्य मे । किञ्चित् साहाय्यमपेक्ष्यते मया ते । अपि भविष्यसि सहायको मे ?

मानसिंह । रणधीर ? किमेवमुदीर्यते त्वया ? त्वदर्थं निजप्राणानपि विश्राणयितुमयं सन्नोऽस्ति । कथमपेक्षया कार्ये परिणतिरत्युत्तमा ? ब्रूहि किं ते प्रयोजनं मया सह ?

रणधीर । मानसिंह ? विदितमेव स्याद् भवता यदस्मत्सेनानीर्दिनत्रयपूर्वं पुरुषमेकमापाद्य बन्दीकृतवानपरम् । तच्चागामिनि निशीथे देव्या उपहारीकरिष्यति ।

मानसिंहः । आम् । वेद्मि तद् वृत्तमहम् ।

रणवीर । तं पुरुषमहं बन्धनालयान्मोचयितुमभिलषामि ।

मानसिंह । ( साश्चर्यम् । ) अपि सत्यम् ?

रणधीर । अथ किम् ? तस्मिन्नेव कर्मणि भवत साहाय्यं याचे ।

मानसिंह । भ्राता रणधीर ? अत्युत्तमोऽयं तव विचारः । अहह ? तं सुन्दरं राजकुमारं यदा बन्दीकृतवान्, नासमहं तत्रैव तदानीम् ? कीदृशस्तस्याद्भुतो विक्रमः ?? अस्मत्सेनानीश्छलकपटेन तं न न्यग्रहीष्यच्चेदन्येनं निग्रहीतुं नैव प्राभविष्यत् । अहो ! कीदृशश्च तेजो बलञ्च ? ? परं रणधीर ? कया रीत्या त्वमेनं मोचयिष्यसि ? कीदृशी चापेक्ष्यते मम सहायता ? इति सत्वरं मे निवेदय । बन्दीकृतपुरुषेण सह कश्च ते सम्बन्ध ? इत्यपि नानुचित चेदाख्याहि माम्।

रणधीरः । मानसिंह ? एष ममाग्रजन्मा । य प्राणेभ्योऽपि प्रियतमो मे ।

मानसिंह । [ सविस्मयम् । ] किमय तवाग्रजो वर्तते ? ।

रणवीर । आम् । ममाग्रजोऽसौ ।

मानसिंहः । कथमेन नृशसस्यास्य करपञ्जरान्मोचयिष्यसि ?

रणवीरः । आयोजितस्तदर्थमुपायो मया । परं ततः पूर्वं कुत्रायं निरुद्ध इति कथयिष्यसि किमु माम् ?

मानसिंह । गुप्तगृहे स्थापितोऽयम् ।

रणवीर । परम् । तत्रेदानीं कियन्त सन्ति प्रहरिण ? ।

मानसिंहः । द्वावेव ।

रणवीर । अपि जानासि तयोर्नामनी ?

---

१ उपाचीयत–अवर्द्धत । २ प्रदातुम् ।

मानसिंहः। आम्। जाने। कुञ्जसिंहारण्यसिंहनामानौ स्त इमौ।

रणवीरः। अतिसमीचीनम्। मोचयिष्यामि तयोः सकाशाद् भ्रातरम्।

मानसिंहः। कया रीत्या केनोपायेन मोचयिष्यसि ?

रणवीरः। शृणु, सहानीतवानस्मि रमणीरत्नानुगुणं नेपथ्याभरणमहम्। तेनात्मानमलङ्कृत्याहं गुप्तगृहान्तिकमुपेत्य वंशीरवेण निजमधुरस्वरं संमेल्य सुन्दरं गीतं गास्यामि। इत्थमञ्जुलो मृदुलश्च मे स्वरो यद् गायकोऽयं पुरुषो वा स्त्री वेति नैव विज्ञातुं पार्यते केनापि। मदीयगानश्रवणाकृष्टहृदयौ प्रहरिणाविमौ नियतमभ्यन्तरे मां नेष्यत इति दृढं विश्वसिमि। ततः साधितं मया ?।

मानसिंहः। भोः ! अपूर्वं ते बुद्धिचातुर्यम् !! रणवीर ! ननु सुष्ठु विचिन्तितं त्वयाऽपि ! तद् ब्रूहि सम्प्रति-किं मया ते साहाय्यं विधेयमिति ?।

रणवीरः। गुप्तगृहप्रवेशद्वारागमनः केवलं भवता निजं प्रशस्तवीटकमादाय स्थातव्यम्। अन्तः प्रविष्टे मयि मुहूर्तानन्तरं ममाग्रजः स्त्रीवेषेण बहिरागमिष्यति। एष निजनाम कथयिष्यति भवन्तमिति सद्य एवाशु तुरङ्गमारोप्य विजयनगरं प्रति विसृजतु भवान्। क्षणमेकमपि नोपरोध्यतामयं भवताऽत्र। यथाप्यस्मच्च शीघ्रमितो भयङ्करस्थानाद्दूरं प्रस्थापयतु भवान्। मानसिंह ? एतन्मदीयकार्यं करिष्यते भवतेत्याशासेऽहम्। न कदापि विस्मरिष्यामि त्वदुपकारम्।

मानसिंहः। रणधीर ! कथमीदृशानि वचांसि निर्यन्ति तव मुखाम्बुजादद्य ! त्वं तु मम बन्धुरसि। चन्द्रसिंहोऽपि मदीयो बन्धुरेव संवृत्तः। त्वत्कथनानुसारमहं तमग्रजमेव तं निसर्जयिष्यामि। अस्ति ततः परं किमपि ? भ्रातः ? अन्तः प्रवेशानन्तरं सावधानेन व्यवहरणीयं त्वया ? विमृश्यैव कुर्या यदेव कार्यम् ? गम्यताधुना। आगतोऽयं निशीथकालः। साहाय्यं विरचयतु विरिञ्चिरियं तव कर्मणीति शुभमाशीर्वचनं मे।

मानसिंहेन सममिमामायोजनां विधाय ततः प्रस्थितो रणवीरः। गुप्तगृहाद्द्वारादेवोपगम्य कस्यचिन्महीरुहस्य तले स्थित्वा निजपोटलिकातो युवतिनेपथ्याभरणे निःसार्य सम्यगामाने मुग्धाङ्गे मकरध्वजवल्लभे रुचिरराजतवंशीमादाय गुप्तगृहमभिगन्तुमारेभे रमणीवेषेण रणवीरोऽयम्।

विलसिततरामिदानीं पुरन्दरदिक्सुन्दरीसुन्दरवदनारविन्दचन्दनबिन्दोरिवेन्दोः कुमुदिनीवृन्दकलिकादलोल्लासिनी सुधास्यन्दोहति-स्यन्दिनी हृदयकैरवानन्दिनी समन्ततः कान्तारेन्दिरामनोमोदिनी सुन्दरचन्द्रिका। कादम्बपुष्पकदम्बकमकरन्दबिन्दुवृन्दनन्दनचन्दनचन्द्रसहचन्द्रिकासम्पर्कशीतलो नवनिकामोद्भासिपार्थिवाकिञ्जल्कपरिमलवाही मन्दमन्दं माकन्दवल्लरीवलयानि नर्तयन् वहति गिरिनदीतटवनानिकुञ्जमरूपधारी मदनैकवीरो

१ मत्ता। २ इन्दुश्चन्द्रमाः। ३ अमृतस्यन्दवर्षिणी। ४ कैरवं कुमुदम्। ५ वनलक्ष्मीः। ६ चन्द्रोऽङ्कुरः। ७ किञ्जल्कपरिमलःकेसरसुगन्धः।

निशीथसमीरः । ईदृशे समये महारण्येऽत्यातिमात्रं खिन्नहृदयोऽपि जनः समागच्छेच्चेन्मुहूर्तं सोऽपि सकलमात्मदुःखं विस्मरेदेवेति मन्ये । ईदृशि मनोहरदृश्यरमणीयेऽस्मिन्नरण्ये रमणीवेषधारी रणवीरोऽयं गुप्तगृहाभ्यर्णमाजगाम । पञ्चषाणि पदानि दूरं वर्तमाने गुप्तगृहे मनोज्ञशिलातलमलङ्कृत्य शनैरयं वंशीरवेण समं निजस्वरं समधात् । स्वरं संधाय मुरलीरवेण रणवीरोऽयं विहागरागेण मधुरमधुरं मनोहरमञ्जुलमालपितुमारभत । कोकिलाकलरवमपि विगणयता मनोहारिणा मञ्जुलेनास्य गानेन साकमखिलेऽपि कान्तारे शान्तिदेव्या नर्तितुमारेभे । कालोऽयं नक्षत्रमालालालितकण्ठया कैरवशालिनेत्रया रमणीयमृगाङ्कवस्त्रया रजनीदेव्या नैशीथः । तत्रापि विहागरागालापोऽयमिति किमिव वर्णनीयो मञ्जुलगानाकर्णनानन्दः ? रणवीरस्य ललितललितं मृदुलमञ्जुलं गानं मुरलीरवेण सममस्मिन्नरण्ये समश्रूयत । गुप्तगृहे चन्द्रसिंहाधिष्ठितबन्धनालयोपरक्षकयोरपि कर्णकुहरमविशन्मञ्जुलोऽयं स्वरः । इति दत्तकर्णौ प्रहरिणाविमौ सातुरं सोत्कण्ठमाकर्णयतामिदं गानम् । क्षणेनैव समाप्तमिदं गानम् । गानावसानसमकालमेव प्रहरिभटयोरनयोर्हृदयं कुसुमबाणविद्धमिव व्यथितं संजातम् । अथारुणसिंहमुद्दिश्य फुल्लसिंहो बभाषे– ' सखे ! अरुणसिंह ! को नु मञ्जुलं गायति गानमीदृशे निशीथे ? कस्याश्चिल्ललनाया स्वर इवायं प्रतीयते मया तु ' इति ।

अरुणसिंह । ममाप्येवं प्रतिभाति ! कियान् मञ्जुलोऽयं स्वरः ! केयं भवेल्ललना गायन्ती ? आः फुल्लसिंह ! अनुमन्यसे चेद् बहिर्गत्वाऽहं पश्यामि–केयमिति ? यथासरम यमहं सुन्दरीमिमामिहापि समानेष्यामि ।

फुल्लसिंह । सुखं याहि । आवां भयावहेऽस्मिन्नरण्ये चिराच्चिरसाव किन्तु कदाप्यानन्दविकासलीलामुपभोक्तुमवसरं नैवालभावहि । अस्य सेनानीरपि नात्रायमस्तीति महान् हर्षविषयोऽयम् । गत्वा सत्वरं कयाऽपि युक्त्या गायन्तीं ललनामिमामनुनीय विप्रलभ्यापि वा त्वमिहानय ।

' अतिसमीचीनम् । ' इत्यभिधायारुणसिंहस्तदनुमतिमासाद्य गुप्तगृहाद् बहिर्निर्जगाम । तत एवमेव तु प्रारब्धमभूद् रणवीरेण पुनर्गातुम् । तदभ्यर्णमुपेत्यारुणसिंहः काञ्चन काम माळङ्कारधारिणीं मनोहारिणीं सर्वाङ्गसुन्दरीं सुन्दरीं वंशीरवतानेन समं गाने नितान्तमेकतानमानसामपश्यत् । अतोऽयमानन्दतरङ्गिणीप्रतरतरङ्गभङ्गेषु प्रेङ्खोलितुमारब्धवान् । मनस्येवायं व्यचिन्तयत्– ' अये ! वनस्थलीयमुत कापि महेन्द्रमन्दिरादवतीर्णा देवाङ्गना किमु ? कथन्नु काननेऽत्र मध्यरात्रे समुपागता स्यादियं सुन्दरी ? ' इति ।

अत्रान्तरे समाप्तं रणवीरगानम् । अथ समन्तान्नयने निक्षिप्यासौ तूष्णीं तिष्ठन्नरुणसिंहमालोकयत् । मदनशरमनागतमिवैनमभिनीय श्रावयितुमना मनागन्तरिक्षाभिमुख

१ मध्यरात्रयुः । २ संयोजयामास । ३ तिरस्कुर्वता । ४ कुसुमबाण कामदेवः । ५ प्रार्थ्य ।

मालाकमाना रणवीरोऽयमवादीत् ' हा हन्त ! संवृत्ता निशीथप्रायेयं रजनी । कुत्रेदानीं गन्तव्यं मया ? अहह ! स्वबान्धवादहं वियुक्ता नाभविष्यं चेद् मद्रममविष्यत् । अहह ! किमत्र मे भविता ? अखिलां रजनीं गातुमपि कथन्नु शक्नुयामहम् ? क्वनु वा गच्छाम्यहम् ? ' इत्यभिधाय रणवीरः कृत्रिमस्फुन्दनमयं रोदितुमारब्धवान् ।

रणवीरवचनानि निशम्यारुणसिंहस्य हृदि न ममौ प्रहर्षः । तत्क्षणमेवायं रणवीरसकाशमुपेत्य पृष्टवान्– ' सुन्दरि ! का त्वम् ? कुतश्चायाताऽसि ? समीपमेवात्र निवासस्थानमस्य दासस्य । श्रुतवानस्मि तव निखिलमार्तमोद्गारम् । न चेत्काचिद्बाधा तर्हि आगच्छतु मया सह भवती । स्वनिवासस्थानमहं नयामि त्वाम् । तत्राद्यतनीं रजनीमतिवाह्य प्रत्यूषे गन्तासि यत्र गन्तव्यम् । ममैको बन्धुरस्ति यत्र सोऽपि गातुं वादयितुमपि सम्यग् जानाति । मया सह तत्रागमिष्यसि चेत्तदापि नियतमानन्दो भविता । ततः प्रमाणं भगवतीति ।'

रणवीरस्य तु–इदमेवाभिवाञ्छितमासीदिति स च पुनोरथायायमरुणसिंहं लोकितकटाक्षलक्षककृपया दृशा विलोक्य मृदुलगिराऽब्रवीत्– ' भवकार्ये मादृशे– आश्रयं वितीर्णवान् भयानिति परममुपकारमहं मन्ये श्रीमतामिति । '

तदीयचञ्चललोचनाञ्चलचलितहृदयोऽयमरुणसिंहस्तमुपादाय तत्कालमेव गृहपृष्ठं प्रविष्टवान् । ललनया सममायान्तमरुणसिंहमवलोक्य फुल्लसिंहः प्रफुल्लहृदा– ' इयमेव सा गायिका वामलोचना ' इति सद्य एव ज्ञातवान् । हृदयमस्य प्रहर्षोत्कलिकाकरालकुलैस्तरङ्गितमिवाभवत् । तावानेतुं प्रयुञ्जाम साम्युत्थानमयम् । गायिकामेनां मृगलोचनां पीतावयाञ्चकार फुल्लसिंहमरुणसिंह इति किमिव वर्णनीयोऽस्य हृदि प्रमोदः ? अथ कुरङ्गलोचनां सभ्रूभङ्गं सनयनापाङ्गव्यालोक्यायं साक्षिवमवादीत् फुल्लसिंहः ' अप्यनुगृहीतायं दासो निजनामाक्षरोच्चारणपरिश्रमेण श्रीमत्या ? ' इति ।

रणवीरः । दासीयम्– 'रत्नकुमारी ' इति प्रख्यापते जनैरखिलैः ।

फुल्लसिंहः । अहो ! कियत्सुन्दरमभिधानमिदम् ? ननु कोऽयं देशो निजविरहपर्याकुलः क्रियतेऽधुना भवत्या ? ।

रणवीरः । दक्षिणदेशवास्तव्येयं दासी । कलयतितरामियं सुकौशलं कालिकलोत्पालापकलापकलासु । महामहिमशालिनो महीमहेन्द्राणां रङ्गपरिषदमियं स्वमधुरगानकलाकौशलैर्लं परितोषितवती बहुशः । ( इत्येवं पञ्चनवानुलोमुपचक्रमे रणवीरः । )

अरुणसिंह । ( सहर्षरिमतम् । ) स्वसुकोमलकलकण्ठगीतोद्गुम्फितपरमसुगुञ्जगानेनेमावपि किङ्करौ सम्भोदयिष्यति किमु तदा श्रीमती ? ।

रणवीरः । किन्तु समुद्दीपते श्रीमता ! किमेतेन ? अपि तु बहुशो गानपरम्परया श्रीमन्तौ सन्तर्पयितुमुद्यतेयं दासी ।

इत्यभिधाय रणवीरो मंजीरयेन स्वकाकलीं सवेद्य मोदमालयरागेण गीतिकामिमामगायन्मञ्जुलगिरा—

---

१ कटाक्षभवल्या । २ नृत्यतालपलमृदङ्गेषु ३ अतिम यन्तम् । ४ सम्मनदिष्यति ।

" यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रुवपदम् '
कथितसमयेऽपि हरिरहह न ययौ वनम् ।
मम विफलमेतदनुरूपमपि यौवनम् ॥ १ ॥
यदनुगमनाय निशि गहनमपि शीलितम् ।
तेन मम हृदयमिदमसमशरकीलितम् ॥ २ ॥
मम मरणमेव वरमतिवितथकेतना ।
किमिति विषहामि विरहानलमचेतना ॥ ३ ॥
मामहह ? विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ ४ ॥
अहह ? कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ ५ ॥
कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया ॥ ६ ॥
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥
वसतु हृदि युवतिरिव कोमलकलावती ।
हरिचरणशरणजयदेवकविभारती ॥ ८ ॥ "

इमां गीतिकामाकर्ण्यैव निमुग्धहृदयौ भूत्वा सानन्दं समस्तकान्दोलनम्– ' अहो माधुर्यम् ? अहो मञ्जुलोऽयं स्वरः ? ' इति वक्तुमारेभाते तौ । गानमवसितमधुना । कुल्लासिंहस्तु– ' गीयत एवाधुना ' इत्यवधार्य मस्तकमान्दोलयत्येव साम्प्रतमपि । यदा ' समाप्तं गानमिदम् ' इति विदितममुना तदा पुनरवोचि–' आम् , अपरैका गीयतां गीतिरिति । [1]

रणवीरः । ( मन्दं तत्कपोलतलमाहत्य । ) अये श्रीमन् ? इयत्येवावधौ विमूढो जातः किमेवम् ? ( इत्यभिधाय रणवीरः कुल्लासिंहं निशितकटाक्षबाणेनाजघान । )

कुल्लासिंहकपोलतले रणवीरस्य कोमलकरशाखापल्लवस्पर्शसमकालमेव कुसुमविशिखशरविभिन्नहृदयः सवेग समुत्थाय रणवीरपाणिपङ्कजं गृहीत्वाऽऽचचक्षे– ' ललितनयने ? किमिति कदर्थिता निजाङ्गुल्यो मदीयकपोलतलसम्पर्कपरिश्रमेण ? अथवा, आम् ? अवगतं [illegible] मया । विकसितमद्य मदीयकपोलतलमाग्यकुसुमैः ? भवतु । पुनरिदानीमालप्यतां कश्चन रागः ।

रणवीरः । अयि गानामृतरसरसायनरसनरसिक ? ईदृशं मनोहरं गानमहं श्रावयिष्यामि भवन्तं यदतिमात्रमानन्दसागरे निमग्नो भविता भवान् । परमिदानीं किञ्चिन्मदिरापानसु-

---

१ विपिनः शरः ।

समनुभूयेत येऽद्यातिसमीचीनं सत्यं गातुं चानुपितुश्चापि पार्येत ! ( इति मङ्गलाचरणं कृतवान् रणवीरः । )

अरुणसिंहः । आम्, सखे ! सम्यगाह कुरङ्गलोचनेयम् । परमिदानीं मैरेयं[1] कुतो लभ्यम् ? ।

फुल्लसिंहः । इयमेवापूर्णता खलु !! कलकण्ठमञ्जुलगानेन समं मदिरापानस्थेकिमिव वर्णनीयः सौख्यातिशयः ! ( रणवीराभिमुखं विलोक्य । ) अपपचेऽस्माकं भाग्ये-ईदृशे स्वर्गसुखेऽपि सम्प्रति विना कादम्बरीं[2] तदीयसुखोपभोगे न्यूनत्वमिव प्रतीयत इति खिन्नाः खलु वयम् ? ।

रणवीरः । इदमेव न्यूनत्वं किमु ? भद्र ! किमिति भवद्भ्यामुदास्यते ? न किमप्यधिकं मे श्रीमदपेक्षया । मदिरापानरसिकोऽहमिति सर्वदा स्वसमीपमेव तां स्थापयामि । गृह्यतां निपीयतामिदानीन्तु । अद्य पुनरियं कुतोऽपि मार्गवर्तिनो नगरादानाय्यते मया । गत्वा विलोकनीयं भवता । पोट्टलिकायां ममातीवोत्तमजातीया मदिरा विद्यते । निःसार्यानीयतामियम् ।

इति वचनमुपश्रुत्यैव तत्क्षणमेवोत्थायारुणसिंहः पोट्टलिकापार्श्वमुपेत्य ततो मद्यपरिपूर्णमेकं काचकुतुपमानीतवान् ।

रणवीरः । ( विहस्य ) न विदितं खलु मया यद् भवन्तोऽपि मद्येषु नितान्तं रसिकाः ? विलासिनो ननु भवन्तः प्रतीयन्ते ? ।

इति निगद्य पुनरपाङ्गविक्षिप्तं भ्रूभङ्गचापे निधाय विसृष्टवानेकं रणवीर इति द्रावण्यम् विभिन्नमर्माणौ संवृत्य मदनातुरौ संजातौ । अनन्तरं रणवीरो निजकराम्बुरुहेण सुन्दरमेकं काचचषकं मदिरापूर्णं विधाय फुल्लसिंहाभिमुखं धृतवान् । वराकोऽयं फुल्लसिंहस्तु प्रफुल्लान्तःकरणोऽजनि । ईदृशी रूपवती ललना स्वकोमलकरपल्लवेन मद्यं पाययति मामिति को नु खल्वपरो मदन्यादृशोऽखिलेऽपि भूमण्डले महाभाग्यशाली पुरुष इति व्यचिन्तयदयम् । क्षणानन्तरं रणवीरेण प्रोक्तम्- ' गृह्यताम्, निपीयतामियमयि विलासिन् ? श्रीमत्सेवायां सन्नद्धेयं दासी । ' इति ।

' सुन्दरि ! कोऽसौ दुर्भागो यो भवत्या हस्तारविन्देन दत्तं गरलमपि पातुं नाङ्गीकुर्यात् ? ' इत्युदीर्य तं काचचषकं गृहीत्वा फुल्लसिंहः स्वमुखे रिक्तमकरोत् । अथापरं चषकं परिपूर्य मदिरया रणवीरोऽरुणसिंहाय —' आस्वाद्यतामियमपि विलासिन् ! भवतापि ' इति सविनयमारुणाय दत्तवान् । तेनापि तत्क्षणमेव रिक्तीकृतं मुखे । इत्थं मुहुर्मुहुरिमौ भूरि पायितवानयं रणवीरः । अतिमदिरापानेन नरापसदाविमौ मदोन्मत्तौ भूत्वा क्षणेन सानुरोधपूर्णं प्रोचतुः— ' हुं ! अपरैका गीयतां गीतिरिति । '

रणवीरः । ( विहस्य ) आम् । गीयतेऽधुना । निरिष्टा रजनिरिदानीमवशिष्यते गातुं

---

१ मद्यम् । २ मदिराम् ।

वादयितुञ्च । किमिति व्याकुलौ भवथ ? पुनरेव कदापि मुहुर्मुहुरीदृश संमेलनमस्माकं भविष्यति किमु ? तदद्यतन्या रज न्यां तु मिथो वयं सुखदु समयीं वार्तां करवामहे ।

इदमाकर्ण्य मदेना-दोलमानोऽरुणसिंहोऽब्रवीत्सहसा- 'स स-सत्यमुच्यते ? पि पि पि प्रियतमया सत्यमुच्यते ? की की कीदृशमस्य सौन्दर्यम् ?' इति । एव प्रलपन्नेवारुणसिंह फुल्लसिंहमवदत्-अ अ अ...यि फुल्लसिंह ? न न नास्ति कापि बुद्धिरेव प प परमेश्वरस्य यदथ मां पुरुष निर्ममे । म म माद्येदप रत्न-कुमार्या कञ्चुकिका व्यधास्यत, त ,त तदातु प्रतिदिनमह किमु नास्यास्तदस्या हृदयोपरि ? प प , पर न जाने किमिति भ्रान्ता बु बु बुद्धिरिय प ..प परमेश्वर स्य ?' इति ।

फुल्लसिंह । अ अ अरुणसिंह ? मि , मि मिथ्या विचारणा तव ? प प परमेश्वरस्य दोषस्तु चिन्त्य एव ? किन्तु त्व कञ्चुकिका भवितु यदीच्छसि त त तदपेक्षया तदीयमम्बर भवितु मे सम्यक् प्रतिभाति ? अ अम्बरश्चेदह भवेय तस्या प्रियाया अ अ अखिलमप्यङ्गमालिङ्गेयम् ? अ अ अलमालिङ्गेयमहम् ? ।

इत्थ मदपरवशौ तौ मिथ प्रजल्पितुमारेभाते । इदमवलोक्य व्यचिन्तयद् रणवीर - 'आम् ? इदानीमिमौ नितरा मदायत्तौ जाताविति निरन्तराय सेत्स्यति मम कार्यम् ?' इत्यालोच्यासौ तौ प्रोवाच- 'अयि विलासिनौ ? इयत्येवावधौ मदमत्तौ जातौ किमेवम् ? (स्मृतिमभिनीय) आम् । वृत्तमेक मया विस्मृतवती यामहम् । यत्र निवसतो भवन्तौ भवतोरेव मन्दिरमिद किमु ? ' इति ।

फुल्लसिंह । (भुवि लुठन् ।) न न नैवेद गृहम् ? ब ब बन्धनालयोऽय प्रिये ? ।

रणवीर । का एव किमु ? तदिमां दासीं नैव दर्शितारौ किमु कारागृहमिदम् ? ।

तत्क्षणमेवारुणसिंह सहसा समगादीत्- 'म म मदीयप्राणप्रिये ? त त त्वत्तोऽपि किमप्यधिक किमु मे ? गि गि गृहाणेमां कु कु कुञ्चिकाम् । वि वि विष्कम्भकमुद्घाट्य प प ,श्य कार गृहम् ।' इति प्रोच्य रणवीराभिमुख कुञ्चिका-गुच्छक निक्षिप्यासमापि मूर्छितो भूत्वा फुल्लसिंहस्योपरि पर्यस्खलत् । अतिमदमूर्छितौ निरी क्ष्येमौ कुञ्चिकागुच्छकमादाय रणवीरो बन्धनागाराभिमुखमभिधाव्य झटिति विष्कम्भक-मुन्मुद्रितवान् । अस्मिन्समये चन्द्रसिंहोऽतितु खक्रान्तः सनिद्रापरवशोऽवर्तत । तदभ्यर्ण प्राप्य- 'तात, अयि तात ?' इत्याकार्य प्राबोधयदमु रणवीरः । सहसैव प्रबुध्योपविश्य चन्द्र 'कोऽयम् ? कि पुनरागतोऽयं नृशंस फुल्लसिंह किमु ?' इत्यवदत् ।

रणवीर । तात ? एषोऽह रणवीरोऽस्मि । तात ? उत्तिष्ठ न कुरु विलम्बम् । चन्द्र-सिंहस्तु समुत्थाय- 'कोऽयम् ? रणवीर किमु ? कथमेव समागत ?' इति प्रोच्य सविस्मयचक्षुषा विलोकितवान् रणवीरम् । अथ सहसैवायमगादत्- 'रणवीर ! किमिदम् ! कथमिदानतोऽसि त्वमीदृशा वेषेण ! इति ।'

रणधीरः । भ्रातरं मोचयितुम् ।

चन्द्रसिंहः । अपि मां मोचयितुम् ? कया रीत्या ? ।

रणधीरः । तात ? नास्ति सम्प्रति कथयितुं समयस्तावान् ? सन्निहितोऽयं प्रहरि-परिवर्तनसमय इति झटिति मदीयकौचेयं परिधाय प्रतिष्ठतां भवान् ? शीघ्रञ्च बहिर्निःसरतु । भवदुपरक्षको भटो मदिरापानातिशयेन मूर्च्छितौ कृतौ मयेति निष्प्रत्यूहं बहिर्निर्याम्यते भवता । त्वर्यतां त्वर्यताम् । अन्यथा पुनर्नूतनायां विपत्तौ पतिष्यावः आवाम् ।

चन्द्रः । वीर ? नाहं गमिष्यामि कदापि त्वामेकाकिनमत्र विहाय ? मदर्थं त्वमत्र कारायां तिष्ठेः किन्तु ? अहञ्च निष्ठुरो भूत्वा प्रतिष्ठेय, किमिति ? इदं तु न कदापि संभाव्यते ? ।

रणधीरः । ( चन्द्रं गन्तुं त्वरयन् । ) तात ? सत्वरं गमनमेव श्रेयस्करमितो भवतः । नायं विलम्बितुं समयो मुधा । प्रभुर्मां रक्षिष्यति ? केनाप्युपायेन निर्गन्तेयमितोऽहम् । अधुनैवापरे प्रहरिणः समागमिष्यन्तीति द्रुतमितः प्रस्थीयतां भवता । गुप्तगृहद्वारपार्श्वे त्वामिवमेकमहं तुरङ्गमादाय प्रतीक्षितुं कथयित्वाऽऽयातोऽस्मि । तत्रोपगम्य निजाभिधानं निवेदनीयं भवतेति सद्य एव भवते दास्यति निजमाजानेयमसौ । तं हयमारुह्याधुनैव विजयनगरे गन्तव्यं भवता । यतोऽत्र न दृश्यते शूरसिंहः । तस्मादयं नृशंसः शून्ये विजयनगरे भ्रातृजायां संत्रासयितुं गत इति शङ्के ।

चन्द्रः । रणधीर ? त्वदिष्टानुकूलमहमाचरामि । वैरिणा सावधानेन व्यवहरणीयम् । पातु त्वां परमेश्वरः ? वत्स ? यथासम्भवमितः शीघ्रमपगन्तुं प्रयतेथाः । न खलु करोतु भगवानेवं कदापि ? परं तथापि विपदां गिरिवरस्त्वदुपरि परिपतेद्यदि न परिजह्यास्तर्हि निजधीरतां कर्हिचिदपि त्वम् ? ? दिनचतुष्टये त्वामहं प्रतीक्षिष्ये । तदन्तरे नागच्छेस्त्वं यदि तदाहं तव साहाय्यार्थमागमिष्यामि । मा कदापि व्याकुलीभवेः ? साधयाम्यहमधुना ।' इत्युदीर्य स्नेहमयीं दृशं निपात्य रणधीरे तदीयकौचेयं परिगृह्य प्रस्थितश्चन्द्रः । क्षणेनैव गुप्तगृहद्वारं प्राप्तः ' कोऽयम् ' इति मानसिंहेन पृष्टोऽयम्— ' कोऽपि तु मित्रो बन्धु ' रिति समुदचारीत् ।

' किमभिधानं भवताम् ? ' इति पुनरनुयुक्तोऽसौ तेनात्मानं चन्द्रसिंहनामानमाचष्टे चन्द्रसिंहः । ' अहो ? आगतः किमु श्रीमान् ? ' इति प्रोच्य तुरङ्गरक्षकस्तुरङ्गमं चन्द्र-सिंहाय दत्तवानयं मानसिंहः । तस्य बहूपकारं मत्वा तमाशीर्भिरनुगृह्य तुरङ्गमारुह्य सगुप्तरौष्मिन्याऽनेनं वाजिनं विजयनगरवर्त्मना प्लुतगत्याऽयं प्रधावयाञ्चकार चन्द्रसिंहः ।

इतश्च चन्द्रसिंहापसरणानन्तरमेवापरे प्रहरिणः समुपस्थाय पूर्वसिंहाख्यौ मूर्च्छा-परवशौ निरीक्ष्य चकिता बभूवुः । सानुसंधानं परं परीक्षमाणैरेभिः ' अतिमादिरापानेन विचेतनाविमौ संवृत्ताविति ' विज्ञातम् । अतस्तौ समुत्थाय कस्मिंश्चन कोष्ठे तापितौ । अथ

१ यत्नात् । ' ज्ञान ' इति भनाचाम् । २ पार्ष्णिः—पुरःस्थपोभगः ।

बन्दीकृतपुरुषं कारायां सुराशिन निरीक्ष्य निश्चिन्ता समवर्तन्त ते । अपावृत कारागृहद्वार सतूलं नभस्पाणपाणय प्रहरिणोऽमी तनोपरक्षणं कर्तुमारेभिरे । निष्कलङ्कोऽथ बालो रणवीरो निपतितो बन्धनालये ॥

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ सचित्रदयानन्ददिग्विजयमहाकाव्याग्रजेन्द्रे कुमुदिनीचन्द्रे सप्तमी कला ॥ * ॥

# अथाष्टमी कला ।

" अन्तर्हिते शशिनि सैव कुमुद्वती मे दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥ "
( शाकुन्तले )

' कामातुराणां न भयं न लज्जा । ' ( स्फुटम् )

' न प्राणान्ते प्रकृतिविकृतिर्जायते ह्युत्तमानाम् । ' ( स्फुटम् )

' केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसन्तापभेषजम् ॥ ' ( पञ्चतन्त्रके )

शौर्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः । ( स्फुटम् )

अथारूढोऽयं चन्द्रसिंहो वाजिनं वायुवेगेन धावयन् गच्छति स्म । मुहूर्तेनैवायं विजयनगरात् गव्यूतिमितदूरवर्तिन्या कस्याश्चिद्वनोपत्यकाभुवि समाजगाम । अत्रायमाश्वं धीरेषु परिवर्तयामास । सम्प्रति स्वसुन्दरमयूखजाले कुमुदिनीनां मण्डलं हासयन्नम्बरतले विराजन् तारकेशो निजतारकसचिवसमूहेन परिवेष्टितमण्डलोऽनिवाम् । क्वचित्क्वचिदरण्ये केवलं झीझीशब्दायमानिझिल्लिको वनराशिरप्यनिरम्भूयत । तदनिरिक्तमखिलं शान्तमिव भासते स्म तत्रारण्यम् ।

साम्प्रतं चन्द्रसिंहेन केवलमङ्गे सूक्ष्मकौशेयाम्बरं पादयोश्चानिरचिरमेकमधोवसनं परिदधे । मस्तकमीषद्वीर्घकुन्तलमात्रमिति तदीया नीलनीला अनिर्लोलाक्षपूर्णकुन्तला ललाटे कामपि कमनीयां कान्तिं कल्पयन्ति स्म । क्षणेनैवायं विजयनगरदुर्गद्वारमाससाद चन्द्र । संवृतम् भूतदानी दुर्गद्वारमिति प्रसमशाखरीज दौवारिकमुच्चैरयमाकारितवान् । क्षणादेवाभ्यन्तरात्

१ चन्द्रे । २ कुमुदिनी । ३ हर्षयति । ४ इष्टः प्रिय । ५ भेषजमौषधम् । ६ प्रशंसनीय । ७ स्वभावः । ८ मयूख किरण । ९ चन्द्र । १० घनतमसा । ११ कुटिलकेशाः । १२ कृष्णम् ।

'कोऽयम् ?' इति ध्वनिरश्रूयत । 'पथिकोऽहमस्मि ।' इति तदुत्तरं दत्तं चन्द्रेण । 'तद् गम्यताम् । नैवेदानीं दुर्गद्वारमपावरीष्यते ।' इत्यभ्यन्तराद् दौवारिकेणावोचि ।

चन्द्रसिंहः । भ्रातः ? अत्यावश्यककार्यार्थमहमिदानीमागतोऽस्मि इति द्वारमपाव्रियतां भवता सत्वरम् ।

दौवारिकः । कथितस्त्वन्नु मयैकदा नेदानीमपावरीष्यते द्वारमिति ? ।

चन्द्रः । किं निमित्तम् ?

दौवारिकः । आदेशोऽयमस्मदमात्यवर्याणां यद् दशवादनानन्तरं कोऽपि समायातु नैवोद्घाटनीयं द्वारमिति गम्यतामधुना । क्वापि तरुतलेऽद्यतनीं रजनीमतिवाहयतु कथं कथमपि भवान् ।

चन्द्रः । अयि भद्रमहाशय ? साक्षादमात्यवरेणैव प्रयोजनं ममाधुना । तत् साक्षात्करणीयोऽयं मया । तदपावृणु द्वारम् ।

दौवारिकः । किमभिधानं भवताम् ? ।

चन्द्रः । नाहं निवेदयामि निजाभिधानमपरिचितपुरुषाय विना तममात्यवरम् ।

दौवारिकः । हंहो ? न कथयसि यदात्मनाम यदि तर्हि नाहमपावृणोमि द्वारम् । गच्छ सुखम् । भवतु किमपि कीदृगपि प्रयोजनं ते परमिदानीं तु नाहमपावृणोमि द्वारम् ? कोऽपि धूर्तः प्रतीयसे खलु त्वम् । याहि शीघ्रमितः । प्रजल्पसि चेदधिकमधुना बन्दीकृत्य त्वां बन्धनालये स्थापयिष्यामि ।

चन्द्रः । कीदृशोऽपि सर्वोपायैर्नैवेतो गमिष्याम्यहम् ? नापावृणोषि यदि द्वारं न पारयिष्यसि तर्हि शयितुं मदुच्चैराक्रोशेन ।

इति वचनमुपश्रुत्य भृशं चुकोप दौवारिकः । कशां गृहीत्वैव हस्ते महत्या त्वरा द्वारोद्घाटनार्थं कुञ्चिकामानेतुं कोष्ठे गतवान् । मनसि चायम्— 'पुरस्मेनमन्तः प्रवेश्य द्विषिः कशया ताडयिष्यामि ।' इति निश्चित्य दुर्गद्वारवातायनमुन्मुद्रितवान् । वातायनोन्मुद्रणसमकालमेव चन्द्रमसा प्रकाशे द्वारपालमिमं पर्यचिनोच्चन्द्रसिंहः । अवादीच्चायममुम्— 'को न खलु ? समरसिंहः किमु ?' इति । दौवारिकोऽप्यमेनं तु पूर्वमेव पर्यचैषीत् । विजयनगरदुर्गकोट्टपालोऽयमभूद् द्वारपालः । तस्मिन्नहन्येव प्रहरिवारपर्यायोऽभवद् दुर्गद्वारे । चन्द्रसिंहमभिज्ञाय कोट्टपालस्तु भिया स्तब्ध एवाभूत् । चन्द्रसिंहमनामन्त्र्येऽहमिति का नु दशा भवेदिदानीं ममेति चिन्तया भयाकुलः संकृत्य विरचिताञ्जलिः सवेपथुसर्वावयवो जानुभ्यामुपविश्य— 'क्षम्यतामयमविनयाचारः ।' इति कम्पमानस्वरमवोचदयम् । भयाकुलमालोक्यैनं तदन्तिकमुपेत्य तदीयं हस्तमादायोत्थाप्य शमयित्वा विजयनगरोदन्तं पृष्टवांश्चन्द्रसिंहः । ततो धैर्यमवलम्ब्य करयुगलं सम्पुटयन् सविनयं जगाद्दायं कोट्टपालः 'कुतोऽकस्मादिदानीमागमनं श्रीमताम् ? महाराज ? अस्मन्नीपनगरे साम्प्रतमतीव भीषणतरं वृत्तं संघटितम् । दिवं समाधितवान् महाराजश्रीविजयसिंहः । तदनु राजमहिषी— सति संजी भूत । अनुपलभ्य भवदीय-

वृत्तान्तमधुना राज्यतन्त्रमखिलं मन्त्रीश्वरश्चालयति । भ्राता रणवीरसिंहोऽपि भवन्तं मोचयितुं गतवान् ।

चन्द्रसिंहः । अपि सती भूता राजमाता ? ।

समरसिंह । आम् । श्रीमन् ? ।

चन्द्रसिंहः । धन्येयं खलु ? नमो नमो देवि ? तुभ्यमस्तु ममासकृत् । सद्गतिं ददातु भवदात्मने परमेश्वरोऽयम् । ( कोट्टपालं प्रति ) समरसिंह ? अस्त्यपरं किञ्चिद्वृत्तजातम् ?

समरसिंह । आमस्ति प्रभो ? भवन्तं नष्टं निशम्याग्रभवती राजनन्दिनी कुमुदिनी परित्यज्याहारं वल्कलाम्बरं वसाना[1] फलाशनैरास्मद्दिनानि श्रीमद्धाम अपश्यती कथं कथमपि गमयति । प्रभुनिदेशश्चेदहमिमं सुदन्तमुदन्तमार्यायै कुमुदिन्यै निवेदयामि ।

चन्द्रः । मदीयसमरशूर समरसिंह ? नावश्यकमिदानीं तदन्तिकं गन्तुम् ।

अत्रान्तरे अपरेऽपि निद्राणा वीरवरा वार्तालापमिममनयोराकर्ण्य प्रबुद्धाः सम्मुखमुपतस्थिवांसं राजकुमारमपश्यन् । सर्वेऽपि प्रमुदितहृदया राजनन्दनमवन्दन्त । अथाब्रवीच्चन्द्रः समरसिंहम्– ‘ समरसिंह ? आगच्छ मया सह त्वम् । प्रासादपर्यन्तं गन्तव्यमिदानीमावाभ्याम् । सज्जितो भव सुशक्तै । स्वभुशुण्डीकृपाणौ चार्पय मह्यम् ।’ इति । चन्द्रनिर्देशानुसारं सज्जीभूय कोट्टपालश्चन्द्रसिंहाय निजभुशुण्डीकृपाणौ दत्तवान् । उभावपि प्रासादं प्रति प्रस्थितौ क्षणेनैव प्रासादभित्तिसमीपं जग्मतुः । तत्कालमेवाभ्यन्तरे कमपि कोलाहलमिवाशृणुतां तौ । ‘ किन्निमित्त. कोलाहलोऽयम् ? इति विज्ञातुकामौ तत्रैवेमौ तिरोहितौ स्थितवन्तौ ।

सकलकलाभिरामो बुधबृहस्पतियोगदर्शनीयो रमणीयतारावलीमण्डलीमण्डितो मनोभिरामश्चन्द्रमा वियद्गगनवेदिकासिंहासनं समलङ्करोति सम्प्रति । अतिक्रान्तनिशीथा विभावरीयम् । समयेऽस्मिन् प्रासादस्य दक्षिणस्यां दिशि विद्यमाने सुन्दरोद्याने नीलवसनमावृताखिलाङ्गः कश्चिन्नरः पादपान्तर्हितश्चेष्टते स्म । प्रासादवर्तिनः सर्वेऽपि जना निद्रापरवशा अभूवन् । केवलं कुमुदिन्येवाद्यापि जागर्ति स्म । अननुगृहीतेयं निद्रादेव्येति प्रतीयते । शीतांशोः शीतलकिरणसम्पर्केणाधिकमियं सतप्यते । ‘ क यामि, कुत्र नु वसामि ? अयि मदीयप्राणप्रिय चन्द्र ? कुत्र तिष्ठसि त्वम् ? ’ इत्यभिधाय राजकन्या कुमुदिनी मुक्तकण्ठं विललाप । रोदसी[4] रोदयता रोदनध्वनिनाऽमुना तदभ्यर्णे निद्राणा तदीयसखी प्रियम्वदा प्रबुद्धा । विलपन्तीं कुमुदिनीमवलोक्येयमगादीत्– ‘ हलो कुमुदिनि ? किन्नु भवति ते ? किमिति रोरुद्यते भवत्या ? समाश्वसिहि सखि ? समाश्वसिहि । मङ्गल कर्ताऽयं प्रभुरखिलमखिलमङ्गलमूलमहेश्वर. ? ’ इति ।

---

१ परिदधाना । २ वेष्टितः । ३ गगनम् । ४ ‘ भूद्यावी–रोदस्यौ रोदसी च ते । ’ इत्यमरः । ५ दुर्गसम्बोधनम् ।

प्रियम्वदाकथितं निशम्य निगदितवती तदीयकण्ठमालिङ्गन्ती कुमुदिनी— 'सखि प्रियम्वदे ? न खलु शान्तिर्मे भवति हृदि क्वापि ? ( चन्द्रं विचिन्तयन्ती ) हन्त ? किमिदानीं करोमि ? तातचरणास्तु गतवन्त एव ननु ? परं तैः समं मदीयं प्रियतमं रत्नमपि न जाने क्व लीनम् ? हन्त ? मनागपि नोपलभ्यते तस्य । हा हन्त ? भस्मीभवति हृदयमिदं सन्दह्य दयितं विना । अयि चन्द्र ? प्रियचन्द्र ? ननु क्वासि ? एहि एहि हृदयेश्वर ? देहि मे दर्शनमाशु । विरहानलेनेयं त्वत्प्रिया कुमुदिनी दन्दह्यते, ग्लायति, ताम्यति, विरौति, शुष्यति, विलपति धाराधरवदश्रुजलधारया क्षालयति कपोलतलयुगलम् । प्रियचन्द्र ? पर्याकुलामिमां कुमुदिनीं सान्त्ववचनैर्मधुरमधुरैः शान्तिदायकैः सान्त्वयतु शीघ्रमेत्य । शून्यमिव भासते त्वां विना सकलं जगदिदम् । प्रियप्राणेश्वर ? भवन्तमेव चिन्तयामि निरन्तरम् ? नाथ ? गतस्य तवाद्य चत्वारि दिनानि व्यतीतानि । भ्राता रणधीरोऽपि मोचयितुमेव भवन्तं गतोऽस्ति । अये ? अद्यापि कापि नोपलब्धा प्रवृत्तिरधुना । भवदर्थं कियन्ति घोरकष्टानि तेन विसोढानि स्युः ? हन्त ? भवतु नु प्राक्तनं कर्म ।' इति वदन्ती मुक्तकण्ठं विलपितुमुपक्रान्तवती राजनन्दिनी ।

अथ तां शान्तवचनैराश्वासयन्ती प्रोवाच प्रियम्वदा— ' हला ? मा रुदिहि । आर्यचन्द्रसिंहरणधीरौ यत्रैव भवेतां परमेश्वरानुकम्पया ततोऽपि समागमिष्यत एवात्र । न कदर्थयाश्रुमोचनैर्निजहृदयम् । धैर्यमाकलय हृदि । किमित्येवं व्याकुलीभवसि ? आगच्छ, नीचैरुद्याने समुपगम्य पर्यटाव आवाम् । हृदयस्य शमनाय ।' इत्युदीर्य कुमुदिन्याः कराम्बुजं गृहीत्वा निजपाणिपल्लवेन तामपनीतवती रुचिरोद्याने प्रियम्वदा ।

आगच्छन्त्याविमे विलोक्य सोऽयं पादपान्तर्लीनः पुरुषः प्रमुदितहृदयस्स्वमनसा संभावितवान्— ' अहो ? मधुरमनयोर्दर्शनम् ? ईदृशीं केसरिकटिकां गिरिशिखरश्रोणितटीं चञ्चलायतमृगीचारुनेत्रःपुञ्जशालिनीं कुन्दकोमलां सुन्दरीमवलोक्य को नु खलु मन्दभागधेयो न क्षुब्धेश्वरः ? साधूक्तं कविकुलगुरुणा कालिदासेन—काममनुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं ॥ पुष्यति । कुतः ?

सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

अस्याः खलु—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ इति ॥

इत्यभिधाय पुरुषोऽयं यत्र कुमुदिनीप्रियम्वदे व्यचरतां तत्र शनैरागम्य कुमुदिनीं प्रोवाच— ' मनोमोहिनि ? मनाङ्निभाल्यतामितो मधुरं चञ्चलदृगञ्चलेनात्मनयनया । दुर्विनीतां मुग्धयितुमुपस्थितोऽयं तव दासः शूरसिंहः ।' इति । शूरसिंहनामश्रवणसमकालमेव चमत्कृत्य पारसिभल्लपति पुरतः कुमुदिनी तावत्तमेव शूरसिंहमालुलोके पुरतः स्थितम् । शूरनाम्नोऽस्यैव श्रुत्वा पृच्छन्ती कुमुदिनी— ' कोऽयम् ? शूरसिंहः किमु ?' इति ।

क्रूरसिंह । आम्, रसिके ? तव प्रेमाभिक्षुरयं क्रूरसिंहो वर्तते ।

कुमुदिनी । चण्डाल ? कथम् लज्जसे प्रलपन्नेवम् ? दुरात्मन् ? कुक्कुरो यथा प्रहृत्य सकृत्सारितोऽपि मुहुर्मुहुरायाति तथा त्वमपि मुमूर्षुरिवान्धोभूत्वा पुनः पुनरागच्छसि । रक्षितुमिच्छसि चेदात्मानमपसर त्वरित सत्वरम् ।

क्रूर । मृगाक्षि ? किमित्येवं सहसाऽऽकुलीभवसि ? तव मधुरयौवनोपवने मदनतापक्रान्तोऽहं विश्रान्तिसुखमनुबुभूषुरायातोऽस्मि । सुन्दरि ? त्वदीयमिन्दीवरेन्दिरासुन्दरं वदनेन्दुबिम्बमवलोक्य चकोर इवाय त्वदधरामृतपानायात्याकुलोऽजनि । इन्दुमुखि ? शरणं प्रपन्नोऽस्मि ते । मारय वा जीवय वा, त्वदायत्तोऽस्मितराम् ।

कुमुदिनी । अरेरे मदनमदमत्त मदान्ध ? कापि साधारणीयमबला कुमुदिनीति मा स्मावगम खलु ?? पापिष्ठ ? स्वसतीव्रतप्रतापज्वलनेनैव भस्मसात् करिष्यति त्वाम् । नरपिशाच ? त्वदङ्गरुधिरै रञ्जयिष्यामि निजकराम्बुजे । दुरापसद ? नाधुनापि व्यलोकयस्त्व वीराङ्गनाम् । नृशंस ? मृगतृष्णिकेव तवेयमाशा ? किमिति निजमुखेन मरणं याचसे ? क्षत्रियापसद ? सर्पिणी सत्रीस्य नैव शुभं भविता ते ? द्रुतमपसर त्वरित ।

क्रूरसिंह । प्रिये कुमुदिनि ? अपि कियदपि कथयेस्त्वं किन्तु नाहं भस्ये खलु ? ऋते त्वदपहरणान् नैवाहमितो गमिष्यामि ? ।

कुमुदिनी । पापिष्ठ ? त्वमेव खलु नापह्रियेथा मामपहरिष्यन् । रे आततायिन् ? किन्तु करोमि तव ? नास्ति मदन्तिकमिदानीमात्मप्रियाऽसिपुत्रिका, अन्यथा पश्यत एव ते स्वासा स्वशौर्यमहमदर्शयिष्यम् ।

क्रूर । किमपि कथय परमहन्तु तव प्रेमणि विक्षिप्तोऽस्मि जातः खलु ? तदास्वादय स्वप्रेमरसामृतम् ।

कुमुदिनी । अकमल प्रजल्प ? ? क्षत्रियकुलाङ्गार नराधम ? किं प्रभवति कश्चिदपहर्तुं शिरोमणिं फणिराजस्य, श्मश्रुकुन्तलं केसरिणः, सतीत्वञ्च पतिव्रतायाः जीवन्तामेवामीषां कदापि ? कण्ठगतैरपि मदीयप्राणैर्नैव कदापि तव दुरभिलषितं फलिता ।

क्रूर । सुन्दरि ? अनुगृहाण ? प्राणेश्वरि ? पाणिं मे गृहाण । किम ते प्रकाशनीयमेव स्यात् दारुणरूप मया ? प्रिये ? अभ्यस्व वचनं मे । मदनानलेनाहं दन्दह्ये । तदनुकम्प्य शमयास्य प्राणघस्मरस्मरज्वालाततिम् । विलासिनि ? मनाङ्निभाल्य प्रेमदृगञ्चलेन प्रणयार्थिनमेनम् । मानिनि ? माननीयमेव मम वचनमन्ततस्त्वया ? सरलमनसा न मनुषे चेद्-ते बलात्कारेणापि त्वां मानयिष्यामि इति नियतमवेहि ।

कुमुदिनी । नराधम ? साध्वीं सीतां सतीं द्रौपदीञ्च सञ्चार्य रावणस्य दुर्योधनस्य च का गतिर्जातेति जानीषे किमु त्वम् ? ।

क्रूर । आम् ! सम्यग् जानेऽहम् ? समरे तयोर्विनाशः संवृत्य यदीयमखिलं राज्यमपि धूलिसाद् गतम्- इत्येव जातं किमुतान्यत् ? ।

कुमुदिनी। पापिष्ठ ! तादृशेन गतिर्मेऽविधौ तथापि इति दण्डमवगच्छ।

क्रूरः। आमाम्, अवगतम्। सुन्दरि ! भवतु यद् भवितव्यम् ! किन्तु मया सम्पादनीयमेव तवेदं प्रेम।

कुमुदिनी। अरे त्रिशाठमिदानीं खलु मया-पाषाणे कियदपि जलं पात्येत परं नैवायं शुष्कार्हश्चित् ? कृष्णवस्त्रं कियदपि क्षीरेण प्रक्षाल्येत परं नैव श्वेतं भविता कदापि ? तथैव त्वादृशं कलुषात्मानं कियदपि ज्ञानमुपदिश्येत परं निष्फलमेव स्यात्। कलुषात्मन् ? नाहमभिलषामि त्वया सममणीयकमालपितुम् ? अपयाहि सत्वरमितः। अन्यथाऽऽकारयामि यामिकान्।

क्रूरः। न गच्छसे किमु ? सुन्दरि ? ।

कुमुदिनी। मूढ ? इत्युपदिश्यमानोऽपि त्वं नावगच्छसि किम्वदपि ? अतिपश्चात्तापं विधास्यसि स्वमग्रे-इति सम्यगवेहि।

क्रूरः। एवम् ?।

कुमुदिनी। आमेवम् ? कुरु यत्कर्तुं शक्नोषि ?।

जातेयं कुमुदिनीति चन्द्रसिंहः क्रूरसिंहसमरसिंहयोर्द्वन्द्वयुद्धमद्यापि जायत इत्यवधार्य स्वं कोट्टपालसाहाय्यार्थमभिद्रुत्यागतवान्।

तत्र निजनिर्धारणाया विपरीतमिव वृत्तमवलोकितवानयम्। नृशंसं क्रूरसिंहमधोनिपतितं दृष्ट्वैवाकृष्टवान् हन्तुमेनं क्रुधा स्वचन्द्रहासं चन्द्रसिंहः। ततः कोट्टपालो जगादेनम्–' राजेन्द्र ! धैर्यं धारयतु किञ्चिदत्रभवान्। नृशंसमेनं निघ्नतश्चेदस्य रुधिरबिन्दुरपि निपतेद् भवतः शरीरे तदाऽपवित्रो भविता भवानिति सानुमहं चन्द्रहासमर्पयतु मह्यम्। अहमेव च्छिनद्मि मूर्धानमस्येति–' निगद्य स्वहस्तं कृपाणमादातुमुत्थापितवान् समरसिंह। अनर्पयतैव कृपाणमस्मै व्याहृतं चन्द्रसिंहेन–' नैव। वीरवर ! श्रुत्वा तव वचांसि प्रमोदामितरां परं तव हस्तेन नाभिलषामि निहन्तुमेनम्। यदर्थमहं चिरकालं प्रतीक्षमाणः सहस्रकष्टानि सोढवान्, यदर्थञ्च घोरं प्रतिज्ञातवानस्मि; सोऽयं नृशंसोऽद्य पुनर्ममैव पाणिपञ्जरे पतितोऽस्तीति स्वयमेव निजपितृश्वशुरयोर्वैरं शोधयित्वा विश्वासघातस्य प्रतिफलं प्रदायास्मै दुस्तरां स्वप्रतिज्ञातरङ्गिणीमुत्तरामि ' इत्यभिधाय चन्द्रसिंहः स्वहस्तं निहन्तुमेतमुत्तोलितवान्।

परमस्य नराधमस्य भक्तस्य जीवनरज्जुरिति न हन्तुमिच्छेव साम्प्रतमेनं परमेश्वरः। अद्यापि तदीयहस्तेन कियन्त्येव घोराणि भवितव्यान्यभूवन् कृत्यानीति कथमिव मिथ्याभवेयुस्तानि ? यथैव चन्द्रसिंहस्तदुपरि प्रहारं कर्तुं प्रवृत्तस्तथैव पृष्ठतः प्रियम्वदया साक्रोशमुच्चैर्व्यगादि–' आर्यचन्द्रसिंह ! अये समरसिंह ! सत्वरमागम्यतामिह। न जाने किमिव करोति कुमुदिनीयम् ! ' इति। इममाक्रोशशब्दमुपश्रुत्यैव चन्द्रसिंहस्तत्र धावितवान्। अथ क्षणं तदीयाक्रोशध्वनिचिन्तामग्नं कोट्टपालमवलोक्य प्राप्तावसरः शनैर्निजहस्तं विमोच्य क्रूरसिंहोऽयं स्वकटितटाच्छुरिकां निस्सार्य समरसिंहवक्षस्स्थले निखातवान्। अत कोट्टपालोऽयं सहसा निःसंज्ञीभूय निपपात भूतले। उपलभ्यामुमवसरं क्रूरः क्रूरसिंहोऽसौ सपदि कोट्टकुड्यमुल्लङ्घ्य सोत्फालं पलायाञ्चक्रे। ततश्चन्द्रसिंहः कुमुदिनीमुपेत्य तामतिभयाकुलमानसामाकुञ्च्यमानकरचरणामालुलोके। सद्य एव समीपवर्तिन्याः पुष्करिण्याः शीतलं जलमानीय कुमुदिनीशिरसि न्यषिञ्चच्चन्द्रसिंहः।

कियत्क्षणानन्तरमुपलभ्य चेतनामियं कुमुदिनी यावन्निमालयति समन्ततस्तावत्तमेव स्वप्राणाधारं संसारसारं विजितमारं राजकुमारं सप्रेमाश्रुधारं निजपरिचर्यापरायणं ददर्श चन्द्रसिंहम्। दृष्ट्वैवाश्चर्यचकितेव प्रेमाश्रुजलं विसृजन्ती स्वनेत्राभ्यामतिप्रेम्णा प्राणप्रियममुं चन्द्रमालिलिङ्ग कुमुदिनी।

किंयत्कालानन्तरं स्मृत्वैव कोट्टपालमाद्यश्चन्द्र.। अनुपलभ्य प्रत्युत्तरमयं स्वयमेव तदन्तिकमुपगम्य कोट्टपालमिमं मूर्च्छावस्थायां भुवि निपतितमवलोकितवान्। क्रूरसिंहमनवलोक्य तत्रासौ निजप्रहरिवीरानुच्चैराहूतवान्। आयातेषु तेषु तत्क्षणमेव कांश्चिद्वीरान् तदन्वेषणाय प्रेषितवान्। इतरांश्च समरसिंहमुपचरितुमादिष्टवान्। अथ कुमुदिनीमुपेत्य प्रोवाच चन्द्रः ' प्रिये ! पाणि[illegible]शाकं प्रहृत्य खलु ! इति। '

'किमयं नराधमः प्रनष्टः किमु कोट्टपालं प्रहृत्य ?' इति पृष्टं कुमुदिन्या । 'आम् । तथैव संवृत्तम् । सपद्येव नृशंसममुमहं कुतोऽपि विचित्य विनाशयिष्यामि लोकादमुष्माद्' इति व्याहृत्य कुमुदिनीं प्रियकरदाक्षादाय प्रासादं प्रविवेश चन्द्रसिंहः । तत्र समतीतां दुर्घटनां विचिन्तयन्त. क्षणेनैव त्रयोऽपि ते निद्रयाऽऽलिलिङ्गिरे ।

समरसिंहं प्रहारयापसृतः क्रूरसिंहो दुर्गमदृष्टपूर्वदेशो निबद्धमुष्टिको निहुतवान् । यदासौ निजयनगराद् बहिर्निरगात्तदा किञ्चिदस्य हृदयं शान्तमभूत् । बन्धनालयाच्चि सृतोऽयं चन्द्रसिंह इति निशाय भृशमाकुलमजनि हृदयममुष्य । स्तोकं दूरमुपगम्य कस्याश्चिन्महीरुहस्य तले समुपविश्य व्यचिन्तयदसौ- 'हन्त ! निष्फलमभूदद्य विनिर्मितं मे कपटजालम् । मद्दवा परिश्रमेण स्वजाले निशातितोऽयं प्रत्यर्थी विनिःसृतोऽत्रुटितकेशाग्रः ! हन्त ! व्याकुलीभवति मे हृदयम् । किङ्कर्तव्यताविमूढ इवास्म्यहम् । यत्र यत्र दृष्टिं पातयामि तत्र तत्र निराशान्धकारं विना न किमपि दृग्गोचरं भवति मे । न जाने किमिति मदन्तेतु प्रज्वलति-तरो प्रचण्डोऽनलः । ( सावेशम् । ) रे चन्द्र ! निःसृतोऽसि खलु मम पाणिपञ्जरात् परम-हमन्ते त्वां दुर्गतमेव विधास्यामीति दृढमवगच्छ । क्रूरं सर्पमेनं संत्रास्य न शुभं भविता ते कदापि ? ! भये ? कुमुदिन्या सह सानन्दं विहरन्तं त्वामवलोक्य संतप्ये खलु !! परं किं करोमि ! विवशोऽस्मीदानीम् । चन्द्रसिंह, रे चन्द्रसिंह ! जीवतो मम त्वमिह संसारे नैव कदापि कुमुदिन्या समं सुखमुपभोक्तुं शक्ष्यसि । यद्वन्मृगयुर्मृगवत्सं विधेतुं निरन्तरं परि-भ्रमति तद्वदयं क्रूरसिंहोऽपि त्वां व्यापादयितुमनाः सततं त्वामनुविचरिष्यति; प्राणानसर-प्रायं त्वत्प्राणप्रियां कुमुदिनीमप्यपहरिष्यति । ( किञ्चिन्मौनमाकलय्य । ) चन्द्र ! यदा तवेदं राज्यमखिलं काननीकरिष्यामि[1], त्वदीयराजमन्दिराणि कन्दरीकरिष्यामि, कलेवरञ्च ते शकलीकृत्य वनजन्तुकुलाय वितरिष्यामि; तदानीमेव दन्दह्यमानमिदं हृदयं मे मनाक् शान्तिमाकलयिष्यतीति ।'

इत्थं विषादपङ्केऽवतरन्मग्ने रिपौ एवास्य- 'संजातोऽयं प्रातः समय' इति न विज्ञातममुना । स तु विचारतरङ्गमग्नेव पेङ्खोल्यमानहृदयः स्थितवान् । अरुणोदयः संवृत्त, यदा तदरुणताम्रविशेषकैर्दुर्मौर्वर्णकिरणावलोकनादोऽस्य वदनारविन्देन संसृष्टस्तदानीमेव विषादमन्दस्पन्दायाः प्रतुद्यांकरमाम्रमकृत्य अगादीयम् 'किमरुणोदयोऽयं जातः ? आम्, एवमेव प्रतिभाति मे । गुप्तगृहे गन्तव्यमिदानीमितो मया । तत्रोपगम्य कथमयं शत्रुरपसृतो बन्धनालयादिति सम्यगनुसन्धास्यामि । मदीया पौरमहाणि. प्रमादं कुर्युरिति न संशेमवीमि । तथापि कथमपसृतो वैरिहतकः ??' इति मनसि विचिन्तयन्नेवायं व्यजिज्ञासत्पालपुराज-नाम । निखिलां रात्रिं प्रजागरेण चन्द्रसिंहस्य पलायनेनाप्यतीव रोषारुणनयनः प्रतीयते-ऽसौ । ईदृशं विकरालं रूपं निरूप्यास्य सैनिकाः किमपि प्रष्टुमपि न शक्ताः धार्ष्ट्यमवल-

१ कणनतुल्यानि करिष्यामि । ( अभूततद्भावे च्विः ) २ विरक्त पीतम् । ३ कर्बुरं मिश्रि-तम् । ४ क्रमः ।

ष्ठितुम् । साञ्जलिबन्धमेनं प्रणम्याखिला एकतोऽवतस्थिरे । तानवलोक्य सहसा सारस्व रमवादीत् क्रूर – ' अरेरे ! कारालय गत्वा शीघ्रं प्रहरिणमाकारयतु कोऽपि ' इति । तत्क्ष णमेव पालितोऽय निदेश । क्षणेनैव वीरणैकेन फुल्लसिंहमाहूय सहानीय घोपतस्थे । क्रुधा क्रूरसिंह पृष्टवान् प्रहरिणमेनम् – ' क्वास्ति बन्दीकृत पुरुष ? ' इति ।

फुल्लसिंह । प्रभो ! बन्धनालय एवास्ति निरुद्धोऽयम् ।

क्रूरसिंह । अपि सत्य कथयसि ? ।

फुल्लसिंहः । आं प्रभो ! बन्दीकृतोऽयमधुनापि नोत्थितो निद्रायाः ।

क्रूर । ( स्वगतम् । ) अये ! किमय मरीचि ? यन्मया स्वनेत्राभ्यां निरीक्षित तस्स्यम् , कथास्य कथनम् ? ( प्रकाशम् । ) बन्दीकृतमेन पुरुष सत्वरमुपस्थापय पुरो मे ।

फुल्लसिंहस्तु– ' यदाज्ञापयति प्रभु ' रित्यभिधाय ततो गत्वा क्षणेनैव बन्दीकृतमादाय तत्सम्मुखमुपस्थितवान् । बन्दीकृतमवलोक्यैव भृशमाश्चर्यचकित सञ्जय सासिंहनादमगादी त्क्रूरसिंह ' अये ! अयन्तु मदन्तिकवर्ती किङ्करत्वेनोषितो रणधीरो वर्तते । रणधीर ! कुत स्त्व कारायाम् ? अह तु त्वामावश्यककार्यार्थं विलासपुर प्राहिणवम् ? ' इति ।

रणधीरः । किमाह श्रीमान् ? नावगत खलु मया सम्यग् भवदुक्तम् ।

क्रूर । पृच्छामि ननु त्वामहम् ' कुतस्त्वमिह कारायामिति ? '।

प्रश्नममुमाकर्ण्य क्षण तूष्णीं स्थित्वा विचिन्तयामास रणवीर ' हन्त ! मरणीयमे वाधुना मया ? अपि प्रकटीभवन्मम रहस्यम् ? भवतु यद् भाव्यम् ? नाह बिभेमि मरणात् । अपि साम्प्रतमेवापहरतु प्राणानय मे क्रूर ? ' इति ।

यावन्न समाप्नोति रणवीरविचारतरङ्गमाला तावदेव पुनरपृच्छदमु क्रूरसिंह, ' किं रे डिम्भ ? किमिति नाकर्णयसि मम कथनम् ? ब्रूहि कस्त्वम् ? त्व कोऽपि वञ्चकोऽसीति सन्दिहे त्वहम् । तदुत्तरय सत्वरम् । ' इति ।

रणवीरः । कोऽहमिति शृणु रे हलाहलपूर्णोदर क्रूरसिंह ? य त्व निजकिङ्करमवधारयसि नास्म्यसौ तव दासो रणधीर किन्तु त्वदुग्रवैरी महाराजश्रीकेसरीसिंहस्य कनिष्ठराजकुमारो रणवीरो वर्तते ।

क्रूर । ( सरोषम् । ) किम् ? रणवीर ! त्वमद्यापि जीवसि किमु ? तत्रैव वञ्चितो ऽह ननु ? हन्त ! त्वयैव मोचितोऽय चन्द्रसिंह इति प्रत्येमि खलु ?

रणवीर । आम्, आम् । मयैव मोचितोऽयमार्यचन्द्रसिंह । नृशस ! कुरु यत्कर्तुं शक्यते त्वया ? प्राणिष्यामि यद्यह त्वत्प्राणानपि प्रहीतु नैव विस्मरिष्यामि ।

क्रूरः । रे धूर्त ! नैव प्राणिष्यसि त्वम् ! नैवापरिचितस्त्वमस्य क्रूरसिंहस्य ? ।

रणवीरः । नृशस ! सम्यगभिजानामि त्वामहम् ।

क्रूरः । परवशाद्य प्रतारितोऽस्मि तवाद्यीयप्रतिफलरूपेण तवासूनाहरिष्यामि ।

रणवीर । तूष्णीभवसि रे नपुंसक ! मा, मा प्रमदस्वाधुना त्वम् ? अहमपि क्षत्रियकुल

एवास्मि, नैवाहं बिभेमि कदापि तव विभीषिकाभ्यः !

क्रूरः । रे क्षत्रियबटो ! लोहशृङ्खलया तव करचरणे नियन्त्रितेऽप्येतावत्त्वमभिमन्यसे ? राज्येन समं विनष्टेऽपि पितरि न कापि परिणतिर्जाता ते मनसि ? ।

रणवीरः । नैव त्रस्यन्ति विपदः कदापि वीरपुरुषाः । पापिष्ठ ! सहस्रशो विदलितमपि हीरकरत्नं यथा नैव परिजहाति निजां रुचिरकान्तिम्; तद्वद्रणवीरोऽप्ययं किमपि पीड्यमानोऽपि त्वया कदाचिदपि नैव त्वामभ्यर्थयिष्यते ! ।

क्रूरः । रे अर्भक ! बालकोऽसि त्वमिदानीमित्यनुकम्प्योऽसि खलु ? परं त्वं तु निजमुखेनैव मरणं शरणं याचसे ।

रणवीरः । हे आततायिन् ! रणाङ्गणभुवि विचरन्तो वीरवरा यथा कदापि मरणभिया नैव पलायन्ते युद्धस्थलमपास्य; तथैवाहमपि त्वत्तो भीत्वा स्ववैरशोधनं विना न कदापि पृष्ठं दर्शयिष्यामीति सम्यगवेहि ।

क्रूरः । आः ! त्वद्वचनमंजुषिता मत्क्रोधानलज्वाला ज्वलयन्तितरां मम प्रतिरोमाङ्गानि ! अलमलं प्रलप्य ? ? सज्जो भव मरणाय ।

अत्रान्तरेऽकस्मादेको भयङ्करो ध्वनिरजायत । ध्वनिसमकालमेव ' क्रूरसिंह ! अधुनाऽतिविक्रमो रणवीरमरणे । नायं मरिष्यति तव हस्तेन ' इति वचनं श्रुतवान् क्रूरसिंहः । इत्युक्त्वैव सहसा शान्तोऽयं ध्वनिः ?

ध्वनिमश्रुतपूर्वमुपश्रुत्यैव चमत्कृतः प्रोवाच क्रूरः— ' अये ? कस्याऽयं ध्वनिः ! रे वीराः ! गत्वा विलोकयत सानुसन्धानम् । यत्कारमिमं निगृह्य मदग्रमानयत सत्वरम् । ' इत्युदीर्य परितो विलोकितवानयम् ।

वीरा अपि समन्ततो विचेतुमारेभिरे । परं नोपगतमक्षिगोचरे किमपि तेषाम् । तदा योऽयं भवेद् भवेत्विति वदन् क्रूरसिंहोऽतिमात्रं क्रुद्धोऽभवत् । स च पुनरपि रणवीरं ततो नेतुमादिश्य कथितवान् सैनिकान्—' अधुना रजनी बालकमेनं निपुणमुपरक्षत यूयम् । श्वः प्रातःकाले देव्या उपहारीकरिष्याम्येनम् । यदा त्वतीक्ष्णतरवारिणा निकृत्यैनमग्निकुण्डे होष्यामि तदानीमेव शान्तिं कलयिष्यति मम स्वान्तम् । गच्छत, नयतैनम् ! ' इति । सैनिका रणवीरं ततो निन्युः । गच्छन्नेव रणवीरः क्रुधा पूर्वं समभाषत— ' क्रूरसिंह रे नृशंस क्रूरसिंह ! प्रकम्पते धरित्रीयं तव विपुलपापकर्मणा । नालं सोढुमियं तव भारं वसुन्धरा । पश्य पश्य । पशुपक्षिणोऽपि त्वामवलोक्य संत्रस्यन्ति । रे चण्डाल ! नितान्तमेव क्लीबोऽसि त्वमिति मन्ये । केसरिकिशोरमेनं देवस्नेहभ्राणां विमुच्य बन्धनात्स्वस्य पराक्रममस्य । बन्ध ! नेदं सम्भाव्यते त्वयि । मृगेन्द्रबालं पञ्जरे बन्दीकृत्य तु शिशुरपि प्रभवति निहन्तुम्— ' इति । ' नीयतामयं सत्वरमितो दुष्टबालः ' इति घोराट्टहासेनैव क्रूरेणाज्ञप्ताः सैनिकाः ।

' धिग् धिक् त्वां क्लीबम् !- ! अन्ततः प्रकृतिरेव प्रतिपक्षः खलु ! न वाऽहं तवानुशासनं त्वयैवानीतमिदं पूर्णं किन्तु परमेश्वरस्तु करिष्यतीति नियतं जानीहि ।' इत्येतानि वचांसि

श्राविताम्येव क्रूरसिंहं वीरैर्नीयमानेन रणवीरेण । रणवीरस्य रोषमयानि वचांसि निशम्य ततः सहसा निर्गतः क्रूरसिंहः । वीरैश्च स्थापितोऽयं कारायां रणवीरः ।

' श्वो रणवीरो निहनिष्यते— ' इत्याकर्ण्य कर्णपरम्परया त्वदीयप्रियमित्रं मानसिंहो मुक्तगलं विललाप । मुहूर्त्तानन्तरमश्रुमोचनैर्लघूकृत्य निजहृदयमयं रणवीरस्यान्तिमं दर्शनं विधातुं नक्तं बन्धनालयं गन्तुं निर्ययौ ।

सम्बन्धित्वेन क्रूरसिंहस्य गच्छन्नयं मानसिंहो बन्धनालये न निवारितः केनापि । एष रणवीराधिष्ठितं कोष्ठमासाद्य बहिः स्थित्वा तमाकारितवान् । मानसिंहशब्दं परिचित्य रणवीरो लोहदण्डजालिकान्तिकमुपेत्य तस्थौ । अमुं विलोक्यैव रोदितुमारब्ध मानसिंहः । तं रुदन्तमालोक्य प्रोवाच रणवीर – ' भ्रातर्मानसिंह ? किमिति रुद्यते त्वया ? यस्मिन् काले यद्भाव्यं भवत्येव तत्तदानीम्–इति मा कार्षीः शोकहर्षौ । किमधिकमहं कथयामि बुद्धिमन्तं भवन्तम् ? इति । '

**मानसिंहः** । रणधीर ? प्रिय रणधीर ? किं त्वं गन्तासि मानसिंहमेनं परिहाय लोकान्तरम् ? प्रियबन्धो ? नाहं पारयिष्यामि त्वदृते धारयितुमात्मानमिदानीम् । रणधीर ? किन्तु रचयामि त्वां मोचयितुमुपायम् ? ( इति रोदिति । ) ।

**रणवीरः** । ( समाश्वासयन् । ) मानसिंह[1] किमिति व्याकुलीभवसि ? मनुजमात्रेण सत्वरं चिरं वैकस्मिन्नहनि मृत्युपरतन्त्रेण भाव्यमेव । भ्रात ? व्यर्थमिदं जगन्मोहजालम् । सकलं हि जीवजातं निजनिजपूर्वजननकर्मजन्यसंस्कारबलेन सङ्गच्छते परस्परमेकमपरेण जगतीह । सर्वेऽपि वयं संसारकान्तारपथचारिणो हि पथिकाः स्मः । तदपहाय शोकमद्यतनीं रजनीं सानन्दं मया समं वितनोतु वार्त्ताविनोदं भवान् ।

**मानसिंहः** । रणधीर ? त्वदीयज्ञानोपदेशामृतवारिणा शान्तमिव भवति मे हृदयम् । किन्तु नाभिलषामि जगतीह कमप्यन्यं त्वदृते । त्वमेव मे परमप्रियो बन्धुरसि । अये ? बन्धोरपि प्रेयानसि–इति नियतेन जगदिन्द्रजालपरतन्त्रेण भूयते मया । अत एव निगलति चाविरलमश्रुजलबिन्दुधारा विलोचनयुगलान्मे । ( विमृश्य । ) नृशंस क्रूरसिंह ? किं त्वं मदीयमेकमात्रं मित्रं मत्तोऽनु वियोक्ष्यसे ? हन्त ? इत्येव प्रतिभाति मे । रणधीर ? किन्तु प्रपञ्चमेव ते मरणम् ? ।

अत्रान्तरेऽकस्मादेव–'नैव, नैव ? ? महान् विलम्बोऽधुना दिवमलङ्कर्तुं रणवीरस्य । भुवमेवायमलङ्करिष्यति । ' इत्येवं वदन् कश्चन सम्मुखमागच्छन् ददृशे योगीन्द्रः । आपादमामस्तकमेष काषायाम्बरं परिदधे । पादयोश्चास्य सुन्दरकाष्ठमये पादुके विरेजतुः । कान्तवर्णमस्य वपुः, विशाले चास्य ललाटे किमपि तेजःपुञ्जमिव चमकति स्म । योगीन्द्रोऽयं रणवीराधिष्ठितबन्धनालयप्रकोष्ठस्यान्तिकमुपगम्यावतस्थे । एनमवलोक्य मानसिंहरणवीरौ विचिन्तयामासतुः–' अये ? किमिदम् ? सर्वेऽपि मार्गा निरुद्धा वर्तन्ते । पदे पदे प्रहरिणोऽपि

१ प्रियतम, ।

पुनरपि पृष्टवती रत्नप्रभा–' पथिको नु भवान् कोऽपि ? ' इति । अथ सावधानः सन्नात्मदृष्टिं तदभिमुखीं विधाय–' किमभिधीयते भवते'ति प्रोक्तवानसौ ।

रत्नप्रभा । को नु श्रीमान् ? इति पृच्छ्यते मया ।

चन्द्रः । अनीशोऽस्मि सम्प्रति भवदीयप्रश्नस्योत्तरं दातुमिति खिद्येतरामहम् । परमादौ को नु भवानिति निवेदयतु माम् ? ।

रत्नप्रभा । इहागतस्य महाराजस्य प्राणप्रियं मित्रमहम् ।

चन्द्र । किमभिधानं भवताम् ?

रत्नप्रभा । ' रत्नसिंह ' इति नामाहं राजकुमार' ।

चन्द्रः । ( सहर्षम् । ) अहो अहो । अतीवसुन्दरमिदमभिधानम् ? भवतु ? अपि तिष्ठति पटमण्डपे भवदधिष्ठाता ? ।

रत्नप्रभा । ओ तिष्ठति । अपि प्रयोजनं किमपि तेन समं ते ? ।

चन्द्रः । आमस्ति । ननायं दण्डनीयो मया ?

रत्नप्रभा । किमर्थम् ? ।

चन्द्रः । न प्रभवामि खलु तन्निवेदयितुं भवते ?

चन्द्रसिंहस्येदृशं विचित्रमुत्तरमुपश्रुत्य विचिन्तितवतीयं रत्नप्रभा–, अहह ? नु खल्वयं कोऽपि नरः । ओजस्विनी कान्तिरमुष्य । मुखमण्डलमस्य चन्द्रसिंहप्रतिकृतिसंवादि-वदनमिव प्रतीयते । न खलु तदा स एवायं भवेत् ? (विमृश्य ।) कथं नु वेद्मि ? पृच्छामि तावद् पृच्छ्यैनं बोधयिष्या ? ' इति विचिन्त्य समपृच्छच्चन्द्रसिंहम्–' भ्रातः ? कोऽपि गुणशाली पुरुषो विभाव्यते भवान् ? । ' इति ।

चन्द्र. । सत्यम् । परं मादृशो गुणिजनस्य न विद्यते सम्प्रति सत्परीक्षकः ।

रत्नप्रभा । किमहो ? कथमेवमुदीर्यते भवता ? ।

चन्द्रः । सत्यमेवाभिधीयते मया । सन्ति सम्प्रति गुणा अवगुणा इव मे ।

रत्नप्रभा । भवतु । त्यजतु विचारमिममधुना । अपि मया सह मैत्रीबन्धं विधास्यति भवान् ? भविता[१]स्यहं तव सुखदुःखभागी ।

चन्द्रः । किम् ? मम मित्रं भवितुमिच्छति किमु भवान् ? अये । अतितरां प्रसन्नोऽस्मि त्वया सह सौहार्दं विधातुमहम् ।

रत्नप्रभा । अपि किमपि कारणं मदुपर्येतावता प्रसादेनाद्यभवत ? ।

चन्द्रः । कारणम् ? अहहह ? ( इति हसति । ) सत्पुरुषो भवानिति प्रत्येमि । यतो मदीयहृदयपद्ममायाः संवादि[२]नी भवदाकृतिः ।

रत्नप्रभा । किंनामधेया भवत्प्रियतमा ? ।

चन्द्रः । अस्ति कुमुदिनी नाम्नी मे प्राणवल्लभा ।

---

१ भवितास्मि । २ अनुसारिणी ।

रत्नप्रभा। ( स्वगतम् ) ध्रुवमिदमेव ? सत्या मम धारणा खलु जाता। ( प्रकाशम् ) वरम्। किमभिख्यो भवान् ?।

चन्द्रः। 'चन्द्रसिंह' इति ख्यातोऽस्मि।

रत्नप्रभा। आः एवं किमु ? वरम् ! क्वाऽस्ति सम्प्रति भवदीयकुमुदिनी ?। चन्द्रसिंह ? पश्य, सुहृदपि संवृत्तो ममेदानीमिति न गोपनीयं किमपि वृत्तं भवतः। अन्यथा मित्रद्रोही गण्यसे ? ?।

चन्द्रः। ( सशोकम्। ) रत्नसिंह ? ख्यापितोऽस्मि खलु क्षणं निरस्तं पुलकमहं त्वया। रोमाञ्चितं कृतं मे वपुः। प्रियसखे ? मदीयभाग्यवल्लभा कुत्राऽस्ति मम। दुरात्मा धूर्तो नराधमः कूरसिंहस्तामपहृत्यानयत्। धूर्तेनानेनामुना कुत्रान्तर्धापिता मत्प्राणप्रियेति न विज्ञायते मया। स्वप्राणेश्वरीगवेषणार्थमेवाहं निर्गतोऽस्मि। किन्तु हन्त ? चिरान्नोपलभ्यते मदीयहृदयेश्वरीयम्। रत्नसिंह ? अतीवदुःखितोऽस्म्यहम्। अनवधिर्मम कष्टानाम्। ( इत्यभिधाय प्रगल्भतवचन्द्रः कुमुदिनीं स्मृत्वाऽब्रवीत् ) कुमुदिनि ? क्वासि त्वम् ? एहि सत्वरेहि। शान्तं विधेहि विरहानलदन्दह्यमानमिदं मे हृदयम्। इत्युदीर्य विलपितुं प्राक्रमतासौ )।

तमाश्वासयन्ती निजगाद रत्नप्रभा– 'चन्द्रसिंह ? किमित्याक्रन्दति भवान् ? समाश्वसिहि। भवन्तमहमिदानीमात्मप्रियबन्धुसदृशं मन्ये। माकुलीभव, धैर्यमाकलय मनागिति'।

चन्द्रः। ( तदीयहस्तपङ्कजं गृहीत्वा। ) प्रियवयस्य ? कुत्रोऽपि विचित्यानय मे कुमुदिनीम्। क्वासौ निलीनेति न वेद्मि। मां विहाय गतवतीयमिति जानाम्यहं केवलम्। अयि मदीयदुःखविश्राममन्दिर सुहृन्मणे ? मदीयकुमुदिनीमन्विष्यानेष्यसि चेत्त्वामहं महोच्चपदभाजं स्वसेनाया अन्यतमं नायकं विधाय वितरिष्यामि बहुलभूभागं ते भूमिभुक्त्वेन[1] वंशपरम्परायै।

रत्नप्रभा। भवतो नायकपदवीं भूमिमपि च नापेक्षयते मया। परमहं सन्मित्रकर्तव्यपालनधिया कुमुदिनीमन्विष्यानेष्यामि नियतम्।

चन्द्रः। तदाश्विरामहमाऽऽनन्दितोऽस्मि।

इत्थं साश्वासनमसान्त्वयदियं रत्नप्रभा चन्द्रसिंहम्। स्वस्थानस्थिताः महर्षिवीरास्तु चन्द्रसिंहमभिज्ञाय स्वकृतदुराचरणकृते पश्चात्तापमकार्षुः। अनन्तरं रत्नप्रभा चन्द्रसिंहं समाश्वास्य सान्त्वयित्वा चामुं पार्श्ववर्तिनोऽन्यतमस्य महोदद्रस्य तुङ्गकन्दकसुन्दरे तके महर्षिवीरेण वदान्यशकाक्रमास्तीर्णे रुचिरकौशेयास्तरणे समुपवेश्य स्वयमुपविश्य च तत्सम्मुखं तेन समं समालपत्। स्वदुःखपूर्णां कथामाख्यातुमारभत रत्नप्रभां चन्द्रः॥

॥ × ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ हिन्दीसंगीतामृतमनामी कुमुदिनीचन्द्रे एकादशी कला ॥ * ॥

---

[1] 'जहागीर' इति लोके प्रसिद्धा। भूमिभुक्– 'जहागीरदार' इति प्रसिद्धः।

# अथ द्वादशी कला ।

" स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया । " (शाकुन्तले)

" प्राणाः परित्यजत काममदक्षिणं मां रे दक्षिणा भजत मद्वचनं शृणुध्वम् ।
शीघ्रं न यात यदि सन्मुखिताः स्थ मूढा याता सुदूरमधुना गजगामिनी सा ॥ "

" किं करोत्येव पाण्डित्यमस्थाने विनियोजितम् । (हस्तामलयाम्)
अन्धकारप्रतिच्छन्ने घटे दीप इवाऽऽहितः ॥ " (पञ्चतन्त्रके)
' शीलं वा पालयेयं देहं वा पातयेयम् ॥ ' (स्फुटम्)

❀ इतस्तु धवलमेकं तरलतुरङ्गमधिरूढः कलितकनककुसुमवल्लरिकलितसूक्ष्मकौशेयाम्बरपरिहितहरिद्दुकूलनिर्मितमहार्हपरिधानः[1] कपोलतलप्रतिबिम्बितमणिमुक्तावलीरुचिरमुकुटमौलिः परितो विलुलितचूर्णकुन्तलजालचोचुम्ब्यमानकन्धरः कुरङ्गमिव तुरङ्गं नर्तयन्नयं मानसिंहेनानुगम्यमानो रणवीरः काननशोभामवलोकमानो निववृते निजशिबिरम् । घोरोद्वेजायमानमदयितां केनचिदपरिचितपुरुषेण सम समालपन्तीं समालोक्य विस्मयसान्द्रमना मनाङ् निकटमुपगम्य तुरङ्गमादवतीर्य स्नेहमयेन दक्षभुजेन रत्नप्रभामालुलोके । सा च स्वामिनमुपस्थितमाशु समवलोक्य समभ्युत्थाय प्रणम्य चाशु संक्षेपेण- 'आर्यचन्द्रसिंहोऽयम् ?' इति तत्क्षणमेव विज्ञापितवती । स्वप्रियाचातुर्येण परमप्रसन्नो बभूव रणवीरः । इयत्कालमनया 'श्रीमानार्यचन्द्रसिंहः समाश्वास्यानुरुद्धः' इति भृशं प्राशंसीदसौ रत्नप्रभाम् ।

समयेऽस्मिन्नर्धनिमीलितलोचनोऽधोमुखः स्थितोऽभवच्चन्द्रः । सोऽधुनोन्मील्य विलोचनयुगलं यावदवलोकयति तावदात्मसुहृदमपरेण समं समालपन्तमालोकयत् । तस्मादुत्थायासौ रणवीरमभिनेत्रदृशा विलोकितवान् । अथ पृष्टवानयं रत्नप्रभाम्- 'सखे ? कोऽयमागन्तुको नरः ?' इति ।

रत्नप्रभा । अयमस्मन्महाराजो वर्तते योऽसौ दण्डयितुं निर्दिष्टो भवता ।

चन्द्रः । (रणवीराभिमुखमालोक्य) नैव, नैवायमसौ ? ।

रत्नप्रभा । तत् कोऽयमिति परिचीयते भवता ? ।

चन्द्रः । (रणवीरमुखमालोक्य ।) अयमपरिचितकुमारो ममानुजमनुकरोति वयसा वर्णेन वपुषा चापि ।

रत्नप्रभा । (दृढनिश्चयं कर्तुकामा) किंनाम्योऽसौ श्रीमदनुजः ? ।

चन्द्रः । (सगद्गदस्वरम् ।) रणवीरनामासौ ममानुजः ।

---

१ परिधानम्-अधोवसनम् । 'परिधानान्यधोंऽशुके' इत्यमरः ।

रणवीरस्तु निजाग्रजन्मन ईदृशीं दशां निरीक्षितुमक्षमोऽधिककालमिति सद्य एव चन्द्र-सिंहाभिमुखमभिद्रुत्य–' अये ! आर्य ! ईदृगवस्थान्तरं प्रपन्नोऽसि ।' इत्यभिधाय चन्द्र-मालिङ्ग्य मुक्तकण्ठं विललाप । समयेऽस्मिन् रत्नप्रभाया लोचनयुगली प्रेमाश्रुजलपूर्णा बभूव । यदैव रणवीरो निजबन्धुमालिलिङ्ग तथैवासौ चन्द्रेणापि दृढं वक्षसा परिषस्वजे । ' कोऽयम् ? रणवीर किमु ? ' इत्युदीर्य साट्टहासमहसदयं चन्द्रः । क्षणानन्तरमेव पुनरस्य मनो भ्रान्तमिति सहसा रणवीरं स्ववक्षस्स्थलादपसार्य दूरं निपात्य तीक्ष्णदृष्ट्या च तदभि-मुखमवलोक्य पृष्टवानमुम्– ' कोऽसि त्वम् ? इति ।

एव समुत्तिष्ठन्– ' रणवीरोऽस्म्यहं भवदनुजः ? ' इति समुदचारीत् । ' किम् ! ममानुजो रणवीरः किमु ? ' इति समाश्वस्य निश्चिन्तयामास चन्द्रः । परमनुन्मिषितविचारान्तरतया रणवीराभिमुखमालोक्य क्रुधा प्रोक्तवानसौ–' नैव नैव ! नासि ममानुजस्त्वम् ! मदीयर-णवीरस्तु मत्प्राणप्रियामन्वेष्टुं गतवानस्ति । दुष्ट ! धूर्तोऽसि त्वं कोऽपि । ममानुजरूपं धृत्वा वञ्चयितुमायातोऽसि त्वम् । तिष्ठ तिष्ठ । तत्फलमहं त्वामास्वादयामि ' इति प्रोच्य प्रहरिसकाशादाच्छिन्नामसिधेनुकां रणवीराभिमुखं समुत्तोल्य प्रोवाच– ' कृतम ! त्वम् ? त्वमेव । ब्रूहि ? दयांय ? काऽस्ति मम कुमुदिनी ? नो चेदहं त्वां निहन्मि ।' इति निगद्य रणवीरं हन्तुमभिमुखयात् ।

सद्य एव चतुरा रत्नप्रभा मध्ये समभिपत्य तदीयहस्तं गृहीत्वा पुरोऽनन्धस्तनेनं निरुद्ध-वती । मध्ये निपत्य सनयसूचकता चेत आलोक्यवेयं रत्नप्रभा, तदा तु ध्रुवमेव रणवीरस्य प्राणास्समुदक्रमिष्यन् ।

रणवीरो निजभ्रातुरीदृशीं विक्षिप्तावस्थां निर्ध्याय परमदुःखतया मूर्च्छितो भूत्वा निप-पात भूतले । तत्क्षणमेव प्रहरिणो रणवीरमुत्थाप्य पटमण्डपं नीत्वा शय्यायामधिशाय्य तद्ग्रीवां मंक्षु प्रकृत्यानेतुं प्रायतन्त । पटमण्डपं नीते रणवीरे चन्द्रो निजाभ्यर्णस्थितां रत्न-प्रभामालोक्य विहसन्नप्राक्षीत् ' रत्नसिंह ! उपरतः किमु भवदीयमहाराजः ? ' इति ।

रत्नप्रभा । नायं संस्थितः । मूर्च्छामापन्नोऽस्ति । चन्द्रसिंह ! अननुगुणमिदमाचरितं भवता ?

चन्द्र० । प्रियवयस्य ! किं करोमि ? दुःखाकुलोऽहं जातः । नास्ति मे किमपि संज्ञानम् । रक्षितोऽयमाप्तप्रभुरिति सम्यक् व्यधायि भवता, अन्यथा व्यापादिष्यदयं वराको मदसि-धेनुकाधारातीर्थे नियतम् ।

रत्नप्रभा । अपि समाश्वयिष्यति पटमण्डपं मत्रानधुना ? ।

चन्द्रः । नैव । परं कदा त्व मेलयिष्यसि मां कुमुदिन्या सहेति ब्रूहि ।

रत्नप्रभा । एहि । इदानीमेव मेलयामि सहानया भवन्तम् ।

चन्द्र० । ( सप्रसादम् । ) किं वदसि ? रत्नसिंह ? त्वमतिवञ्चकोऽसीति तर्कयामि

---

१ अनुन्मिषितम्–अस्फुरितम् । २ विलोक्य । ३ शायित्वा । ४ मृतः । ५ अनुचितम् ।

खलु ? अस्तु । कथय, काऽस्ति मे कुमुदिनी ? ।

रत्नप्रभा । अत्रैव वर्तते ।

चन्द्र । अये ! किमत्रैव वर्तते प्रिया मे ? तद् दर्शय दर्शय, प्रियमित्र ! दर्शय मे त्वरितमिमाम् ।

रत्नप्रभा । शान्तिमाकलयतु भवान् । अधिकमधीरो भवसि चेन्नोपलभ्येत ते कुमुदिनी कदापि ? तदाधेहि शान्तिं हृदये ।

चन्द्र. । ( सप्रश्रयम् ) सखे ! शान्तिमाकलयामि । तद् गन्तव्यमधुनाऽस्माभिः । रत्नप्रभा तु– ' आम् । मामनुगच्छतु श्रीमान् । ' इति निगद्य च चन्द्रसिंहमेकस्मिँल्लघीयसि पटमण्डपे नीत्वा सुन्दरायामेकस्यां शय्यायामुपवेश्य समगादीत्– ' आर्यचन्द्रसिंह ! अत्रैवोपविशतु भवानधुना । गत्वाऽहं कुमुदिनीं सत्वरमिह समानयामि ! ' इति ।

' सुखं गम्यतां भवता ? ' इति सातुरमुदतीतरच्चन्द्रसिंहः ।

अथ पटमण्डपाद् बहिरागत्य रत्नप्रभा प्रहारिद्वयं सम्बोध्य अगाद् ' युवामुभौ चन्द्रसिंहाधिष्ठितपटमण्डपमुपगम्याविदितस्वचेष्टितौ तत्र किञ्चिद्दूरे पर्यटतम् । नासौ ततोऽपसरेदिति सावधानौ समुपरक्षतम् । अहमल्पसमयानन्तरमेवाहं पुनरायामि । परं पश्यतं युवां ' स्वोपरक्षणाय नियुक्तौ भटाविमाविति ' नामुना मनागप्याशङ्क्येत ? ' इत्थं तौ सूचयित्वा स्वस्वामिनो दशामवलोकयितुं तदीयपटमण्डपं गतवती । सम्प्रति पूर्णसञ्ज्ञावस्थायामासीनोऽभूद् रणवीर । रत्नप्रभामालोक्यातिप्रमदं सन्नुत्य स्वभ्रातुः कुशलवृत्तं पृष्टवानसौ । ततो रत्नप्रभया–कथमप सान्त्वयित्वा समुपवेशितः पटमण्डपे–इति सकलं वृत्तं रणवीराय न्यवेदि । परस्तात् कैरुपायैरधुनाऽऽपद्येत स्वस्थतां चन्द्रसिंहस्य चित्तमित्युभौ परामृशताम् ।

पटमण्डपोपविष्टश्चन्द्रो गतायां रत्नप्रभायामेना प्रशशंस बहुशः । अथ तेन तत्र पर्यटन्तौ प्रहरिणौ ददृशे । परिपठिता हृदिस्तु–इति समुत्थाय तयोरन्तिकमुपेत्य पृष्टवानयम् ' अये ! यमराजकिङ्करौ किमु युवाम् ? ' इति । तयोरेकः प्रहरी । ( प्राञ्जलि । ) नैव प्रभो ! नावां यमदूतौ ।

चन्द्र. । तत्को युवाम् ? ।

प्रहरी । श्रीमच्चरणसेवकौ ।

चन्द्र. । न खलु युवां कौचिद् वधकौ ? ।

प्रहरी । मा शान्तं पापम् ! ! नेदमाशङ्कनीयं प्रभुणा ।

चन्द्र । तत्कथमत्र युवां पर्यटथः ?

प्रहरी । श्रीमतां संरक्षणार्थं प्रभो ! ।

चन्द्र. । ( सचकितम् । ) मद्रक्षणार्थम् ! कथय किं जातं मे ? यन्मम रक्षणाय समायातौ युवाम् ! ।

प्रहरी । दयालो ! न वर्तते सम्प्रति स्वस्थं भवदीयं मनः । विक्षिप्तावस्थामनुभवति श्रीमानिदानीम् ।

चन्द्रः । विक्षिप्तोऽस्म्यहं किमु ?।

प्रहरी । आम्, प्रभो ! ।

चन्द्रः । ( विहस्य । ) किं तदा सम्यङ् मां रक्षितुं प्रभवेतं युवाम् ? ।

प्रहरी । आमतिसम्यक्तया श्रीमन् ! ।

चन्द्रः । एवम् ! तदायातु युवयोरन्यतरो मदभ्यर्णम् ।

तदादेशसमकालमेव तयोरेकः प्रहरी तदुपकण्ठं गतवान् । सद्य एव चन्द्रः प्रहरिणमेनं स्वकराभ्यां दृढमभिगृह्य समुत्क्षिप्य भूमौ प्राक्षिपत् । भुवि पतनेनायं प्रहरी तीव्राघात-व्यथा मूर्छितो बभूव । अथ योऽसौ प्रहरी सकलमिमं प्रकारमवलोकयन् स्थितोऽभवत्त-दभ्याशं तमभिद्रुतवानयं चन्द्रः सहसा । स्वाभिमुखमभिद्रवन्तं निरीक्ष्य चन्द्रं वराकोऽयं प्रहरी चकम्पेतराम् । अथावितत्य पाणी विरचिताञ्जलिरभवच्चन्द्रसविधे । भयभीतमिममव-लोक्य प्रोवाच चन्द्रः 'किमिति बिभेषि त्वं मत्तः ? त्वं तु मित्रमसि मदीयम् ।' इति ।

प्रहरी । ( सकम्पमानस्वरम् । ) प्रभो ! किमितोऽपरन्तु विचिन्तयति श्रीमान् ।

चन्द्रस्तिहस्तु- 'किं ते प्रयोजनमनुना ? मूढ ! न पश्यसि किमु- चिरान्मामाह्वयतीयं मे कुमुदिनीति ? न शक्नोम्यहं यदि तदन्तिके तर्हीदमनर्हमिव दृश्येत ?' इति व्याहृत्या-कस्मात्ततः पलायितः । क्षणादेवायं नयनपथमपि समतिक्रान्तः । वराकोऽयं प्रहरी सम-पगतभयश्चायं सम्भ्रान्तचित्तः संवृत्य मूर्च्छितं प्रहरिणमपरं सावधानं विधाय तस्मै सकलं वृत्तं न्यवेदीत् । 'बलीयसी भगवदिच्छा ।' इति कथयित्वा तौ यामिकौ स्वनरेन्द्रपट-मण्डपमुपगम्य- 'महाराजमावां दिदृक्षू स्वः ।' इति प्रतीहारं निवेदितवन्तौ । सोऽभ्यन्तरं प्रविश्य महाराजाय विज्ञापितवानिति नरेन्द्रो नरेन्द्रमहिषी चोभौ बहिरागतौ प्रहरिणोरभ-योरभ्यर्णम् । महाराजमवलोक्यैवेमौ यामिकौ बद्धकरसम्पुटौ- 'कथमयं विद्रुतश्चन्द्रः !' इत्यखिलमुदन्तं न्यवेदयतां नरेन्द्राय । श्रुतमिदमाकर्ण्य सुतरां दुःखितौ रत्नप्रभारणवीरौ । प्रधाविताः परितः सादिनस्तदन्वेषणार्थम्: परं नोपलब्धोऽयं चंद्र. कुत्रापीति निवृत्ता इमे गिराननताः !

अथ रणवीरोऽयमीश्वरेच्छापरतन्त्रमात्मानं मन्यमानस्तूष्णीमेव निजसेनामादिदेश ततः प्रस्थातुमत्र । क्षणेनैव सकर्मणो निवृत्य सैनिकाः 'विजयतां महाराजश्रीरणवीरसिंहः । चिरं जीवतु महादेवी रत्नप्रभा ।' इति जयघोषमुदीरयन्तो गुलगूढाभिमुखं प्रतस्थिरे ॥

अतिचिरकालनिलीनावलोकः संप्राप्यमानपितृवन[१]कल्पसकलभुवनवलयः परिहीयमाणाभिमतप्राप्तिमनोरथकुसुमगुच्छको भग्नमनस्को मलिनवदनः क्षामशरीरो राजकुमार-श्रीचन्द्रसिंहोऽयं कदाचित् कुत्रचिदपि पतन्, क्वचित् प्रस्खलन्, कस्यचित्परःसहस्रसोरहदनि-

१ पितृवन श्मशानम् ।

करविराजिनः संप्लवमानविविधजलहंसकारण्डवशालिनः शीतलनिर्मलनीरमालिनः सरोवरस्य तीरभुवमुपाजगाम । परिमुक्ताहारोऽयं चिरकालात् । केवलं जीवनरक्षणार्थमभ्यवहरति फलानि कानिचित् कदाचिदसौ । क्षुधया शोकेन चास्य शरीरं दुर्बलमजनिष्ट । परिम्लानमेतस्य रुचिरं तेन शालि वदनारविन्दमपि । असौ सरोवरतीरमुपेत्य क्षणं तूष्णीं स्थित्वा स्वमनसा प्रालपत्- ' अहह ? कुत्रेदानीं गच्छामि ? स्वमनोहारिणीं कुमुदिनीं पुनरुपलब्धुं नैव शक्ष्यामि किमु ? निबिडान्धकारपूर्णा इव प्रतिभान्ति मे सकला आशाः । इमे निष्कृपाः पादपाः, अमी निर्घृणाः पतत्रिणः, एते निर्दयाः पशवोऽपि निखिला आपत्कालेऽस्य मम परिहासमिव कुर्वाणा विहसन्तो दृश्यन्ते खलु !! अयि सकललोकलोचन लोकबन्धो ! क्वाऽस्ति मम प्राणप्रिया कुमुदिनीति दर्शय मे ॥ अनया विना निष्फलं भाति मे सकलं जगदिदम् । सा एव मम लोचनचन्द्रिका, एषा एव मे हृदयाम्भोजिनीविहरणशीला कलहंसी, इयमेव मम जीवनसर्वस्वञ्च वरीवर्ति । यतो मदीयं सर्वस्वमेव वियुक्तं मत्तस्तत्किमर्थं ममाधिकजीवनमिह । मृत्युरेवायं सन्मित्रं मे सम्प्रति । मरणं शरणं प्रपद्यैवाहं कुमुदिनीविरहवेदनानलज्वालां शमयिष्यामि । एहि, एहि, अयि मदीयसर्वकालसाहचर्यशालिनि सखि शस्त्रिके ? एहि । त्वं मदीयहृदयरुधिरं निपीयान्तर्ज्वलितामिमां प्रचण्डविरहानलहेतितति शमय शीघ्रम् । परत्रैवाहमप्रियतमां कुमुदिनीं प्राप्स्यामीति दृढं विश्वसिमि । ' इति प्रोच्य निजाञ्चलस्थपरिकरपट्टिकाबन्धादसि-पुत्रिकां बहिर्निःसारयामास ।

अथ यथैवायं स्वहृदि शस्त्रिकां निखातुं प्रावर्तत तथैव पृष्ठतः केनाप्यकस्मात्करपल्लवोऽस्य जगृहे । स्तब्धीभूयासौ परिवर्त्य पृष्ठतो यावदवलोकयति तावदस्य नयनसरणिमुपेयिवानेक काषायाम्बरशाली तेजोमालीव योगीन्द्रः । छुरिकां प्रक्षिप्यासौ कुब्जीभूय योगीन्द्रमभितो निपुणं निरीक्ष्य सहसा दन्तान् निष्पिष्य सकण्ठीरवरवं योगीन्द्रहस्तमभिगृह्य च क्रुधा प्राभृत- ' दुरात्मन् ? त्वम् ? त्वमेव कुमुदिनीं ममापहृतवानसि । चिरादद्य निपतितोऽसि त्वं मद्भुजपञ्जरान्तरे । तदाहमिदानीं निर्मुञ्चामि जीवन्तं त्वाम् ? ' इति ।

योगीन्द्रः । ( विहस्य । ) कुमार ? कोऽहम् ? इति जानासि किमु ? ।

चन्द्रः । ( सामर्षम् । ) त्वामखिलं जगदिदमभिजानाति । पापं परिचिनोति सकलो-ऽपि लोकः ।

योगीन्द्रः । तद् ब्रूहि-कोऽहमिति ? ।

चन्द्रः । दुरात्मा धूर्तसिंहस्त्वमसि ।

योगीन्द्रः । कुमार ? त्वं मां किं करिष्यसि ? ।

चन्द्रः । अरेरे अनुन्दु ग्रदायक कुमुदिनीलुण्ठकनायक ? धूर्त ? व्यापादयिष्यामि त्वामहम् ?? [ इति भुवि प्रक्षिप्तां शस्त्रिकामादाय योगीन्द्राभिमुखमुत्तोलितवानसौ ]

---

१ मुद्गलं । २ पक्षिणः । ३ दिवाकर । ४ छिन्नपरिच्छदम् । ५ आलम्बं मध्यमम् । ' कमर ' इति भाषा । ६ मुष्टिबन्धात् ।

योगीन्द्रः । ( हस्तमुद्यम्य । ) कुमार ! शान्तो भव ।

[ इति स्वहस्तेन चन्द्रमस्तकं परामृशद् योगीन्द्रः ] करस्पर्शसमकालमेव चन्द्रस्य मस्तकं स्वस्थतां प्रतिपेदे । पूर्णसंज्ञामुपपन्नोऽयं क्रूरसिंहभ्रान्त्या योगीन्द्रं तिरस्कृतवानहमस्मीत्यात्मन्येव हृणीयमानो योगीन्द्रं क्षमां ययाचे–' प्रभो ! क्षन्तव्योऽयं बालः । अविद्युत्त्वावेगवशाज्जातोऽयमपराधो मे । ' इति ।

योगीन्द्रः । कुमार ! न किमपि प्रयोजनमत्र क्षमायाचनस्य । न भवति किमपि संज्ञानं प्रणयसूतस्य । चन्द्र ! स्वर्गीयोऽयं तव प्रेमा ! ! नूनं निर्मलप्रेमामृतसरोवरमसि । सन्तुष्यामितरामहं त्वयि । ब्रूहि किमिच्छसि त्वमिदानीम् ? ।

चन्द्रः । दयालो ! किं मत्साहाय्यं कर्तुमत्र प्रस्थितो भगवान् ? इत्थमेव यदि ? तदानुगृह्य कुमुदिन्या सह योजयतु मां प्रभुः ।

योगीन्द्रः । अपि दिदृक्षसे तामिदानीम् ? ।

चन्द्रः । ( प्राञ्जलिः ) आं दिदृक्षे तां प्रभो !

योगीन्द्रः । ( हस्तमुत्थाप्य । ) तत्पश्य निजाभिमुखम् ।

अथ स्वसम्मुखे निरीक्षमाणो ददर्श चन्द्रो यद् " विशालयोर्गिरीन्द्रयोर्मध्यवर्तिनि महति भयानके भग्नप्राये दुर्गे क्रूरसिंहः कुमुदिनीमनुनयति बहुविधं निजाधीनां विधातुम्; परमियं मनागपि नाङ्गीकुरुते तदीयमभ्यर्थनमिति नृशंसः क्रूरसिंहोऽसौ तस्याः करचरणं निगडयित्वा तां कस्यचिन्महीरुहस्य शाखायामवलम्बयति । " इति विलोक्यातिवेलं जज्वाल रोषानलेनासौ । एवं निजशक्तिकां निःशङ्कमभिभूय निबद्धमुष्टिकः कुमुदिनीमोचनाय क्रूरं निहन्तुमभ्यद्रवत् । तावदेव तदीयनेत्रवर्त्मनि प्रादुरभवदन्तरिक्षचुम्बिनीभिर्ज्वालाभिः ... तितिभिरतिभयङ्करो दुर्गपरिसीम्न्यन्तरे आज्वल्यमानः प्रचण्डः कृशानुः ।

दृश्यमिदमवलोक्य पश्चादपसृत्य चन्द्रो योगीन्द्रचरणयोः प्रणिपत्य प्रार्थयाञ्चक्रे–' प्रभो ! परित्रायस्व मे कुमुदिनीम् । ' इति । इदमाकर्ण्य योगीन्द्रो निजमुत्तम्भितं हस्तं पुनरापचकर्षेति सकलमिदं दृश्यमन्तर्हितं बभूव । अतो विस्मयस्तिमितमना अपृच्छच्चन्द्रो योगीन्द्रम्–' भगवन् ! यदिदमखिलमवालोकि मया तदद्भुतं स्वप्नः किमु ? ' इति ।

योगीन्द्रः । चन्द्र ! सत्यमिदमखिलम् ! किन्तु यत्स्थलमालोकि त्वया तदितोऽतिविप्रकृष्टं वर्तते । त्वामतिव्याकुलमालोक्य कुमुदिनीदर्शनप्रबललालसाक्रान्तं वीक्ष्य ते निजयोगबलेनाहमतिदूरवर्ति दृश्यमिदं नैदिष्ठीभवेदं त्वामदर्शयम् ।

चन्द्रः । भगवन् ! किं तत्स्थलमितोऽतिदूरं वर्तते ? अधुना प्राणिति किमु मे प्राणप्रिया कुमुदिनी ? !

योगीन्द्रः । आम् । सुचरित्रेयं वरवर्णिनी स्मारं स्मारं त्वामवधारमवधारं रोदं रोदं कथं कथमपि दिनानि क्षपयति तत्र वसन्ती । यत्रेयं निवसति साध्वी तत्स्थानमितो विंशतिगव्यूतिमितं दूरे वर्तते ।

चन्द्र.। तत् किमुपलप्स्यते मदीयकुमुदिनी ?।

योगीन्द्र.। आमुपलप्स्यते किन्तु धैर्यमाधेहि स्वहृदये। सरसं स्वादुमधुरञ्च भवति फलं धीरतालतायाः।

चन्द्र.। ( प्रणम्य। ) प्रभो ? किमिदानीमनुष्ठेयं मया ?।

योगीन्द्र.। तत्सूचयिष्यति ते मतिस्त्वाम्। परमधुना गच्छामुना सरलमध्वना। सन्ध्यायां ज्वलनज्वालाजालजटालपरिखायां विरमेस्त्वम्। गच्छ, साधयामि साम्प्रतमहम्।

चन्द्रः। दयानिधे ? कदा पुनरात्मदर्शनानुग्रहेण बालकमिमं पावयिष्यति प्रभुः ?।

योगीन्द्रस्तु– ' मासकालं कर्ताऽस्मि साहाय्यं ते। मङ्गलं तनोतु तव मङ्गलनिधि परमेश्वर. ?? ' इत्यादाय प्रस्थित. क्षणेनैवान्तर्दधे। अन्तर्हिते योगीन्द्रे चन्द्र.– ' किं साक्षात्परमेश्वरस्तु नैवागतो भवेन्मम साहाय्यं विरचयितुम् ? अथवा महात्मद्वारैव साहाय्यं रचयति सदा परमेश्वर ? ? कोनु प्रभुरधिगन्तुं प्रभोरगम्यलीलाम् ? ' इति विमृशन्नेव योगीन्द्रनिर्दिष्टवर्त्मना प्रतस्थे ॥

इतस्तु गिरिदुर्गे– ' मासितोऽद्य पाण्मासिकोऽवधिरिति नियतमेव समेष्यति नृशंस क्रूरसिंह ! ' इति सम्प्रधार्य कुमुदिनी विमला चोभौ महाचिन्ताकुले समवर्तेताम्। ' कथं निजशीलं रक्षणीयमिति विचारो मुहुर्मुहुराकुलयति स्म कुमुदिनीहृदयम्। परं न शशाक किमपि निर्णेतुमियम्। मातिदु.खाकुलमानसाऽन्ते परमेश्वरं प्रार्थितवती कुमुदिनी.'जगदीश्वर ? कीदृशी कियघास्ति तव विचित्रमिदीलया तद्विषयया वा वर्णयितुमलमयं स्वल्पप्रज्ञोजीव.। इति कृत्वैवायमपारे संसारसागरे दु.खावर्ताकुले निमज्जनोन्मज्जनमाचरति। यदासौ प्राणी दुःखेनातिकातरो भवति तदानीमेव भगवन्तं संस्मरति। तदपि तदपराधं क्षममाणः प्रभुस्तदीयमखिलं दुःखजालमपाकरोति। ' इतीत्थं चिरकालं विमलमनसा प्रभुगुणगणगानं कृत्वा सुख्या [illegible] रुरोद। रुदतीमिमां सुन्दरीमवलोक्य विमला समाश्वासयन्ती तामाबभाषे–' सखि ? किमिति रुद्यते त्वया ? मा भैषीस्त्वमपि ? यावदपि तिष्ठन्ति प्राणा ममास्मिन् वपुषि तावदपि तु नृशंसोऽयं नैव चरितार्थो भविष्यति निजमनोरथेषु ?? प्राणान्तकष्टेनापि तव शीलमहं रक्षिष्यामि ? ' इति।

विमलायाः सान्त्वनायुक्तेन वचोजालेन मनागाकलय्य शान्तिं प्रोवाचेत्थं कुमुदिनी– ' सखि ? कदाचिदपि नूनं समागमिह [illegible] भवेदिति सम्प्रत्यपायमिह समेष्यति ? ' इति। ( [illegible] ) ' हा ? प्राणप्रिय चन्द्र ? क्व गतोऽसि ? [illegible] क्रियते, [illegible], [illegible], [illegible], [illegible], [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible] ? त्वदीया कुमुदिनीयं [illegible] [illegible] [illegible], [illegible], [illegible] च। [illegible] [illegible], [illegible] [illegible] [illegible] [illegible]। ' इति।

---

१ [illegible]।

विमला। सखि ! समाश्वसिहि। आर्यचन्द्रसिंहस्त्वदन्वेषणार्थं निर्गतौ भवेदिति प्रत्येमि।

कुमुदिनी। सखि ! मम प्राणेश्वरो देवरो रणवीरसिंहश्चोभौ सकलां ससुद्रमेखलामिलामपि भ्रान्त्वा मां विचिन्वत इति विभावयामि। निश्चयमेव मदन्वेषणाय निष्क्रान्तौ भविष्यत इमौ। केनाप्युपायेनोपलभ्य स्वसविधमुपानामिष्यत एताविति कथयतीव मे मनो निकामम्। परतः प्रभुः प्रमाणम्।

अस्मिन्नेवावसरे नृशंसं क्रूरसिंहं स्वसमीपमायान्तं दृष्ट्वातितरां रुरुदे। तदभ्यर्णमुपेत्य स्मितानन. कुमुदिनीसम्मुखमालोक्याचचक्षे राक्षसः—' प्रिये कुमुदिनि ! विचिन्तितं त्वया पूर्वोत्तरमधिरमिति तर्कयामि। तत्कथयाधुना—' किं प्रयच्छसि मे प्रतिवचनम् ? ' इति।

कुमुदिनी। मदनान्ध ? श्रुतं किमु कदापि— ' भ्रष्टा सतीति ' त्वया ? तत्किमसत्कल्पां पृच्छसि ?।

क्रूरः। ( सविनयम्। ) कुमुदिनि ? किमिति मामवमन्यसे ? किं नैव कामयिष्यसे माम् ?।

कुमुदिनी। कामयिष्ये ? नृसिंह ? त्वामहं हत्वा स्वसहोदरसदृशं कामयिष्ये। नय मां निजनाथसन्निधौ। भर्त्ता ते प्रभुः, प्रणिपतामि ते चरणयोः ? [ इत्यभिधाय पर्य्यश्रुमुखी चन्द्रमुखीयं निपतिता नृसिंहचरणयोः। ]

क्रूरः। ( विहस्य। ) किं पुनरहं त्वां चन्द्राय प्रत्यर्पयामि ? स्वहस्तगतं स्वर्जेयमद्भममृत-फलं किमु ? नैव नैव ? नेदं संभाव्यते कदापि ? कुमुदिनि ! मदीयच्छन्दोऽनुवर्त्तिन्या भवितव्यमेव त्वया खलु ?? जातोऽहमत्यन्तप्रेम्णा तदयि सुन्दरि ! अङ्गीकुरु मामनुगृह्य। अचिरात् सुखयिष्यामि त्वामहम्।

कुमुदिनी। स्वप्राणेश्वरे—एवाहं तु सर्वविधं सुखं समानिष्टमुपलभे।

क्रूरः। दुराग्रहमहिले ? मन्यस्वाधुनाऽपि मन्यस्व। नोचेद्गततः पश्चात्तप्स्यते त्वया। सुन्दरि ? विशिखोऽस्मि जातस्त्वदर्थमहम्। न कुरु मां निराशम्।

कुमुदिनी। नराधम ? किमिति स्वहस्तेन रोपयसि निजनाशबीजम् ? विमूढ पापिष्ठ ? किमिति क्षणभङ्गुरमिमं देहमभिमन्यसे ? अरेरेऽनर्गगर्वबर्बर ? बहिः सुन्दरं दृश्यमानमिदं शरीरं रुधिरमांसमेदोमज्जामलमूत्रपरिपूर्णं हि वर्त्तते तत्किमर्थमेवंविधं पुनर्गौन्धिकार्यं प्रार्थयसि ? विमृश रे कामान्ध ! विमृश पश्य, न विद्यते किमपि बाह्याकाररमणीयेऽस्मिन् वपुषि त्वद्मां-सास्थिरक्तादृते। अतिदुर्गन्धपूर्णमभ्यन्तरमस्य ?

क्रूरः। इन्दुमुखि ? सत्यं तवोदितम् ? परमस्यान्तरे तिष्ठति तदखिलम् ?? किन्तु मुह्यति मम मनो बाह्यमिदं सौन्दर्यमवलोक्य। तदिदानीं त्वमङ्गमा मामालिङ्ग्य समया-न्वर्वलितमिदं मम मर्मस्थलम्।

कुमुदिनी। ( स्वगतम्। ) पराकाष्ठा खलु ??? नान्या सरणिरेव मरणं विना ??

---

१ मेखला रशना काञ्चीति यावत्। २ हठाग्रहिणी। ३ दुर्गन्धमयदेहम्।

( प्रकाशम् । ) नराधम ? नृशंस ? वद, स्वदायत्तेयं विधीयते ननु ? ब्रूहि रे मदनान्ध ? ब्रूहि । कतमदङ्गं कामयसे मे ? इमे नयने निरीक्ष्य विक्षिप्तोऽसि यदि ? तर्हि नेत्रे समुत्पाट्य तुभ्यमर्पयामि ? आभ्यां स्तनाभ्यां विमोहितोऽसि चेत्तरौ निकृत्य वितरामि ते ? बहिराकाररुचिरां रुधिरामिषपुरीषदूषिकापिञ्जूषादिमलमूत्रालितान्तरं दुर्गन्धरस्मुदकपुञ्जादिकां त्वचं विलोक्यमोन्मत्तोऽसि चेत्, तर्हि, तदेमामसृग्धौरां विदार्य ददामि खलु ?? कुचावलोकनमुग्धोऽसि, यदि तदा स्तनाविमौ छित्त्वा निर्वपामि ननु ते ? ब्रूहि ब्रूहि, पापिष्ठ ? कस्मिन्नर्पघने संलग्नं ते मनः ? मदीयशिरोरुहाः कुन्तलाश्चेदभिलष्यन्ते तानपि तर्हि व्यपरोप्य चिकुरान् वितारयितुं सन्नद्धाऽस्मि । तन्मा कुरु विलम्बम् ?? पूरय निजकलुषकलशमनिलम्बितमेव ? यदिदं कलेवरं कदाचन पञ्चत्वमाप्स्यति तद् गात्रमर्थैवाहं मृत्तिकाधीनं विधातुं सज्जाऽस्मि । शीलरत्नसंरक्षणाय मरणादपि न बिभेमि । सतीत्वपालनहेतवे परः सहस्राभी राजपुत्रदेशीयवीररमणीभिर्हृदयानौ हुत्वाऽऽत्मानं भारताभिजनयोषिदभिमानमद्यापि प्रथयन्तीनां वानिमण्डले लब्धवर्णानि सुवर्णरञ्जिताक्षरैर्मुद्रापितानि नामाक्षराणि देदीप्यन्ते जगदितिहासपत्रावलीषु । अहमपि स्वपातिव्रत्यपालनार्थं विकरालात् कुटिलकालादपि न त्रसामि मनागपि ? । तद् ब्रूहि ब्रूहि-कलेवरस्यास्य कतमदङ्गं मम कामयसे निकामम् ! ।

क्रूरसिंहः । कोमलाङ्गि ? नाहमभिलषामि त्वदीयं निर्जीवमङ्गम् ? ननु यदिदमुदीर्यते त्वया मृद्वायत्ता तनुरियमग्ने भवितेति तथ्यमेव ?? परमिदानीन्तु तदमन्दानन्दप्रदं प्रतिभाति मे सुन्दरं कलेवरम् । हृदयङ्गमे ? विमूढोऽहं जातोऽस्मि त्वामवलोक्य ?? तदङ्गीकुरु सम्प्रति समनुकम्प्य विरहानलसंतप्तं प्रणयिनोऽस्य हृदयं तर्पय निजाधररसामृतदानेन । प्रिये ? तवाधररसामृतमाधुर्यमधरीकरोति सुधामाधुरीमपि ??

कुमुदिनी । ( सक्रोधम् । ) रे गर्ह्यकर्मकारिन् क्रूरतर ? अप्यहं दृश्येव रतिरिव दर्शनीया, परं हालाहलपूरितं ममोदरम् ?? अपि मन्येथाः कोमलाङ्गी मां किन्तु वज्रमयीवाहमस्मि खलु ?? अस्मि तीव्रविषधराहं सर्पिणी ?? मदीयस्पर्शसमकालमेवाऽऽहरिष्यामि तव प्राणानहम् ?? ।

क्रूरः । धर्षिते ? अपि परिचिनोषि माम् ? अयमपि क्रूरसिंहो विषचूषकः कृष्णः काकोदरो वर्तते । तत्प्रसह्यतया भव मदधीना । न खलु प्रभवसि प्रमारयितुं मामनुना स्वमालस्याशनमयवचसा मनागपि ?? ।

कुमुदिनी । आत्मद्रुहक ? मृगतृष्णिकामिव पुष्णासि तृष्णाम् ? यद्वदान्दोलिकाशायितो

---

१ आमिषं मांसम् । २ पुरीषं विष्ठा । ३ 'दूषिका नेत्रयोर्मलम् ।' ४ 'पिञ्जूषं कर्णयोर्मलम् ।' ५ असृग्धरा=त्वक् । ६ ददामि । ७ अङ्गे । ८ आरभ्य । ९ 'चिकुरः कुन्तलो बालः' । १० प्राप्तप्रतिष्ठानि । ११ शीघ्रम् । १२ अधरीकरोति निरस्करोति । १३ आन्दोलिका दोला बालशय्या वा ।

बालकौ मृगाङ्कमुपलब्धुं कामयतेतरां मद्वदेव तवापीयं कामना खलु ?। प्राणान्तेऽपि कुमुदिनीयं नैवाधीना भविष्यति तव दुष्टवृत्तेः ।

क्रूरः । कुमुदिनि ! न खलु संतापय क्रूरमेनं निपवरम् ।। अन्यथा त्रिपत्स्यसे त्वम् ।

कुमुदिनी । पापिष्ठ ? नाहमुद्विजे त्वत्तः । परमेश्वरोऽस्ति मां रक्षितुं परमेश्वर ।

क्रूर. । बलादहं त्वा वशयिष्यामि ।

कुमुदिनी । नास्ति शक्तिः कस्यापि धर्षयितुमपि मां किंपुनर्वशयितुम् ! ।

क्रूर. । दुराग्रहिले बाले ? तदधुना पश्यामि-कथं रक्ष्यते तव शीलमिति । इदानीमेवाहं त्वां वशयामि । ( इति व्याहृत्य नृशंसोऽयं कुमुदिनीमभ्यद्रवत् । )

तत्क्षणमेव याऽपौ सकलमियत्कालं पार्श्वे स्थितैव शृणोति स्म; सेयं विमलहृदया विमला रोषारुणनेत्रा सती मध्ये समभिपत्य क्रूरम्-' रे मदनमूढ ? विमृश किंचित् ! किमिति कदर्थयसि पतिव्रतामिमाम् ? ' इति प्रोक्तवती ।

क्रूरः । ( साश्चर्यम् । ) अहो ! किम् ? विमला किमियम् ? धन्याऽसि रे धन्याऽसि ? बुद्धिमतीव रक्ष्यसे ननु भृशम् । कदा नु संवृत्ताऽसि त्वं पतिव्रता ?।

विमला । यदारभ्य जातं त्वया सह पाणिग्रहणं मे ।

क्रूरः । जातं ते मया सह पाणिग्रहणं किन्तु त्वन्तु नासि ममानुगुणा भार्या । इयमेव सुन्दरी वर्तते मदनुरूपा पत्नी । एषा एव मम प्राणवल्लभा ? ।

इति विमलां निगद्य क्रूरसिंहो यथैव कुमुदिनीमभ्यगमत्तथैवामुं निरुध्य धिक्कृत्य चाभ-यीद् विमला-' नृशंस ? सतीं संपीड्य नैव शुभं संभावितं ते ? क्रूरसिंह ? विमृश । अनवधिस्तव दुरितकर्मणाम् । हा हन्त ? कियन्त्यो हताः ? ? कियन्तोऽमी व्यभिचाराः ??? रे क्रूरसिंह ? परमोऽवधिरयं जातस्ते दुरितानामिति विमृशाद्यापि । दुष्परिणामो भविता तवान्ते इति विचिन्त्य सतीमिमां संपालय नारीमिति । '

क्रूरः । ( सक्रोधम् । ) पांसुले[1] ? अलमकं प्रजल्प ! । नाहं शुश्रूषे तव भषणमिव भाषणम् ।

विमला । न शुश्रूषसे चेन्मम कथनं बलादहं त्वां श्रावयिष्यामि ।

क्रूर. । अपसरसि न वा त्वमितः ?

विमला. । नाहमपसरामि. ।

क्रूर । हा हन्त ? त्वमपीदृशी भविष्यसीति नाहमज्ञासिषम् । अन्यथा क्षणमेकमपि सुन्दर्याऽनया सह त्वां नैवास्थापयिष्यम् ? कुलटे ? अपयाहि त्वमितः । भव मे नयनान्तरिता ।

विमला । अपयामि ? क्व याम्यहम् ? त्व मामानीतवानसीति कुत्राधुना गच्छामि ?

---

१ पांसुला कुटिला व्यभिचारिणीतियावत् । २ भषणं श्वरवः ।

अस्म्यहं तवार्द्धाङ्गिनी ।

क्रूर । नासि त्वं मे किमपि । गच्छ, यथासुखं कुत्रापि ।

विमला । तन्मा परिणीय किमिति त्वमवजानासि खलु ? ।

क्रूर । यथाभिरुचितं मे । अपसरसि नवा त्वमधुना ? ।

विमला । नापसरामि । नैवापसराम्यहमितः कदापि ? ।

क्रूर । चरणप्रहारैस्त्वां निःसारयिष्यामि तदा ? ।

विमला । भवतु । कुरु यदभिरुचितम् । सतीरक्षणार्थमहं त्वत्पदप्रहारमपि पुष्पप्रहारमिव मन्ये खलु ? ? ।

क्रूर । एवम् ? ( अन्यतो विलोक्य । ) अये ? क कोऽत्र भो ? ।

तत्क्षणमेव–' आ प्रभो ? ' इति प्रोच्य बहिर्वर्तिनौ बलिनौ द्वौ सैनिकौ तत्राभिद्रुत्य समायातौ । ' निगडयत रज्ज्वा कुलटामिमाम् ! । ' इति तौ निगडयितुं तावादिदेश क्रूर । तत्कालमेव तन्निदेशवर्तिनौ भटौ निष्कलङ्कामिमां विमलामश्रृङ्खलयतां रज्ज्वा । विमलहृदयाया विमलाया विलोचनाभ्यां प्रावहदश्रुप्रवाहः । तदपि किञ्चिदपि नाद्रवदस्य पाषाणमयं हृदयम् । आदिष्टवानसौ दुष्टः सैनिकौ वराकामिमामबलां कशया ताडयितुम् । हा हतभागिनि विमले ? कियत्तु कष्टं सह्यते त्वया ! तीव्रं दण्डयिष्यति खलु त्वत्पीडयितारं नरं न्यायकारी प्रभुः । नृशंसस्य क्रूरसिंहस्य विलासानलदोपहारीभूतायास्तापसाया विमलाया पृष्ठोपरि यमदूताकारौ भटौ कशया ताडयितुमारेभाते । विनैकमपि चीत्कारमियं मौनमुखी पतिव्रता विमला तीव्रकशाप्रहारान् सोढवती । न पारितं कुमुदिन्या कष्टमिदं द्रष्टुं विमलायाः । आत्मार्थमियमापतिता विपत्तावीदृश्यामिति विचिन्त्य धैर्येण तत्पुरस्तादुपगम्य कुमुदिनी कशाप्रहारान्निवार्य तौ भटौ प्रत्युवाच– ' नृशंसौ ? किमर्थं निरपराधामिमां नारीं प्रहरथ ! ' इति ।

अथेयं क्रूराभिमुखीभूय जगाद– ' नराधम ? दण्डय, ताडय, मारय वा मां यथेष्टम्, किन्तु विमलामिमामबलामनुकम्पस्व त्वम् ' इति ।

क्रूर । ( सकोपम् । ) अयि दुराग्रहिले बाले ! त्वां तु नैवाहं विमुञ्चयम् । तवापीदृश्येव दुर्गतिर्भविष्यतीति परामृशाम्यधुनाऽपि ।

कुमुदिनी । नपुंसक ! उद्यतास्मि सोढुमहं तव दण्डम् ! परं नैवान्यपरिणयमारप्स्ये विचारं कदापि ?

क्रूर । ( सैनिकौ प्रति ) इमामपि निगडयित्वा बहिरानीय महीरुहशाखायामालम्बयतमिति स्वयमेवानुनेष्यति मामियम् ।

तदादेशसमकालमेव रज्ज्वा निबध्य कुमुदिनीं बहिर्नीत्वा समीपवर्तिनः कस्यचिन्महीरुहस्य शाखायामवालम्बयतां तौ । विटपविटपावलम्ब्यमाना कुमुदिनीयं सकलमपि कष्टं सहमाना परमेश्वरस्मरणं कर्तुमारभत । शाखिशाखायामालम्बितेयमिति निशम्य निगडिता

ऽपि विमला संगर्जन्ती समगादीद्— ' रे आततायिन् ? वयस्व किञ्चित् ? किमर्थं सतीमिमां संपीडयसीति ? ' ।

क्रूरः । तूष्णीमेधि । प्रजल्पसि पुनः किमु ? ( सैनिकौ प्रति ) प्रहरतमिमाम् । पुनरिमां वराकीं विमलां कशया प्रहर्तुमारभेतां तौ । कशाघातमसहमानाऽग्वे मूर्च्छिताऽभूदियमबला । तां ततः कुमुदिनीसमीपे नेतुमादिश्य स्वयमपि कुमुदिनीनिकटं ययौ । एतमवलोक्य निमीलितं निजनेत्रयुगलं कुमुदिन्या । तस्मिन्नेव क्षणे विचेतनां विमलामुत्क्षिप्य तत्रानीतवन्तौ भटौ । बहिः प्रवहता शीतलानिलेन क्षणादेवोपागतचेतना विमलेयं तरुशाखालम्बितां कुमुदिनीं विलोक्य तारस्वरमरोदीत् । रुदतीयं निवारिता भटाभ्याम् । साश्रुनेत्रा कुमुदिनीं विलोकयन्ती निषण्णा विमला । क्षणं मौनमाकलय्य पुनरुवाच कुमुदिनीं क्रूरः– ' किम् ? अद्यापि न परिवर्तितो निजविचारः किमु ? कुमुदिनि ? प्रतिपद्यस्व मे वचनम् । अन्यथोपपन्नं ते दारुणं मरणमिति । '

कुमुदिनी । चण्डाल ? नाहं बिभेमि मृत्योः । प्रयुक्ताऽस्मि मर्तुम् । अपि कियदपि मां त्रासय वा, पीडय वा, कर्तय वा, मारय वापि स्वयम्; परं नैवाहं भविष्यामि पशुवृत्तेस्तवाधीना ? ।

क्रूरः । प्रचण्डानले दाहयिष्यामि त्वाम् ।

कुमुदिनी । अपि दाहय मां वह्नौ ? उतावतारय वा कलेवरान्मम त्वचम्, आहोस्विन् मदङ्गानां राजिकानिभानि शकलानि वा कारय यथेष्टम् ? । परं नैवाहमुररीकरिष्यामि कदाचिदपि त्वदायत्ततामिति दृढमवेहि ।

क्रूरः । अहमरुणात्तप्तात् दन्दह्यमानात् लोहशलाकादण्डैस्तवदङ्गेषु प्रवेश्य शरीरात्तव पिशितं निष्क्रामयिष्यामि । अथ यदा त्वमातिदुःखेनाक्रन्दिष्यसि तदैवाहं मोदिष्ये । इत्यमतिदारुणमारं मारयिष्यामि त्वामित्यधुनापि सन्यस्व ।

कुमुदिनी । दुरात्मन् ? पतिव्रता नार्यो निजप्राणेश्वरेण सहातिप्रसन्नमनसा प्रविशन्ति चितानलम् । अतस्त्वत्तापितशस्त्रेभ्यो लोहकीलेभ्योऽपि न बिभेमि मनागपि ! " यद्वा तद्वा भव । " इति तां निगद्य सैनिकानाबभाषे क्रूरसिंहः ' अयि वीराः ? श्वः प्रातररुणोदयात् प्राग् दुराग्रहग्रहिलामिमां ललनां देव्यै बलिं दास्याम– इति तामिदानीं तरोरवतार्य देवीमन्दिरं नयत यूयम् । अद्यतनीं रजनीमियं दारुणं पीडनीया भवद्भिः । ततः प्रभाते कुशानुतप्तैरायसदण्डैरस्याः शरीरान्मांसं निःकास्याग्निकुण्डे स्वकरतो हुत्वा देव्या-ऽपहारीकर्तास्महे वयम् । अतस्तत्रोपगम्याग्निकुण्डमपि सज्जीक्रियताम् । त्वर्यतां त्वर्यताम् । न किंचिन्मात्रमपि प्रमादोऽत्र कार्ये युष्माभिः । ' इति । अथ तरोरुत्तार्य कुमुदिनीं प्रचण्डवत्र्मना निम्युर्गुप्तगृहाभिमुखं सैनिकाः । क्रूरस्य रोमहर्षणं भयङ्करं वचो निशम्य कुमुदिन्याश्चातिदुर्गतिमालोक्य भिया कम्पितुमारभत विमला । अत्याकुलेयमुत्थाय क्रूरसिंह-

*

चरणयोर्मस्तकं निधाय चोक्तवती ' क्षम्यतां प्राणेश ? क्षम्यतामियम् । परित्रायस्व कुमुदिनीम् । अनुगृह्यतामिय भवतेति । '

क्रूर । ( चरणाभ्यां प्रहृत्य । ) रण्डे ? तूष्णीं भव । नाय समयो दयाशब्दप्रयोगस्य ।

विमला । प्राणनाथ ? परित्रायतामियं भवता । सुकुमारतया नालं सोढुमियं दारुणं भवदीयशासनम् । अनुकम्पनीया राजनन्दिनीयमित्येव याचे भवदन्तिके तस्याः प्राणभिक्षाम् । [ इति निगद्य दीनवदना विमला पुनरग्रहीत् क्रूरचरणौ । ] तां दूरमपसार्य जगाद नृशंसोऽयम्- ' दुष्टे ? एषोऽहं तव भिक्षां प्रदयामाभिहन्मि । तूष्णीमेधि त्वमिति । '

नृसिंहस्येदं वचनमाकर्ण्य रोषारुणनेत्रा सञ्जातेव विमला । बन्धनदशायामपि घोरं संगर्ज्य व्याहृतवतीयम्- ' दुरात्मन् ? गच्छ, नाहमद्यारभ्य तव भार्या त्वमपि नासि मम पतिः । त्वदीयदुरितकर्मणां फलमवश्यमेव दास्यति ते परमेश्वरः । चण्डाल ? नाशकोऽयं विनाशस्ते हृदयवेदि । अद्यप्रभृति वैरिणीभूताऽस्मि तेऽहम् । यावज्जीवं त्वत्प्राणग्रहणकर्मणि व्यापृता भविष्यामीति । ' क्रूरसिंहस्तु ' कुलटे ? नाहं जीवन्तीं त्वां मुञ्चामि । कुमुदिन्या सह तवापि शरीरं देव्या उपहारं करोमि । त्वमितोऽद्य निशीथे नेष्यसे । तावत् कुरु परमेशस्मरणम् । श्वो विभाते त्वमपि सुरलोकं प्रस्थातासे । ' इत्यभिधाय चतुरो वीरान् विमलोपरक्षण कर्मण्यादिश्य निशीथे तां देवीनिकटमानेतुञ्च निर्दिश्य ततो निरक्रामत् ।

कुमुदिनीवियोगेन नृशंसस्यास्य दारुणशासनरचना चैव विचेतनीभूय विमला निपपात भूतले ॥

+ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य +
कृतौ ईशोपनिषत्काव्यमध्याधृते कुमुदिनीचन्द्रे द्वादशी कला ॥

---

# अथ त्रयोदशी कला

" न तथा सैन्यैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं ससिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ "

[ पञ्चतन्त्रके ]

" हा हा देवि ? स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ "

[ उत्तररामचरिते ]

---

१ विधुरः विकलः ।

* यदैव शूरसिंहः कुमुदिनीसमीपमुपेत्य तामभ्यर्थयाञ्चक्रे तदानीमेव रणवीरो निजसेनया साकं गुप्तगृहाभ्यर्णमाजगाम । प्राग् यत्र प्रविवेश चन्द्रसिंहस्तत्रैव स्थले रणवीरो निजसेनां सन्निवेशयितुमादिदेश सेनान्यम् । गुप्तगृहद्वाराग्रतो निवेशितानि निकलितपञ्चकुटीराणि सैनिकैः । रणवीरार्थं क्षोभमितो महानेको मञ्चपटमण्डपः । सायंसमये आत्मना सह मानसिंहं सेनापतिमितरांश्च त्रीन् नायकान् सहादाय रणवीरो गुप्तगृहद्वारनिहितां शिलामुपसार्य कीलयन्त्रं विचित्यापसार्य चेमां शिलां प्राविशदभ्यन्तरे गुहायाः । पञ्चानामेव नृणां द्रुतं शनैरधोऽवतर्तुमारेभे सोपानपरम्परया । पुरोगामिना नायकद्वयेन धृतमभूदात्मकरे प्रज्वलितं स्थूलदीपिकायुगलम् । तदीयप्रकाशे सम्यगवालोक्यत पन्थाः । सर्वे गुहातलमवतीर्य तिर्यगुत्वर्त्मना काष्ठकुञ्चिकाधिष्ठितद्वारान्तिकमागत्य युक्त्या द्वारमपावृत्य चन्द्रप्रकाशविरहितमपि चन्द्रालोकैर्भासितं रिक्तप्राङ्गणमासेदुः । तत्र क्षणं विरम्य परितो दृष्टिं निक्षिप्यामी देवीप्रतिमाग्रतः समागताः । चक्रकीलेन देवीमूर्तिमुन्मुद्रय स्वनायकोऽसौ तदीयं रहस्यं समवबोधयद् रणवीरः । तस्याः प्रतिमाया विचित्ररचनां विज्ञाय विसिस्मियिरे नायकाः । अथ यथास्थितां मूर्तिं मुद्रितवानसौ ।

अत्रान्तरे रणवीरस्य दृष्टिः कियद्दूरवर्तिनि पर्यटतोः पारिचितपुरुषयोरुपरि परिपतिता । ' शूरसिंहभटाभ्यां भवितव्यमाभ्याम् ' इत्यवधार्य रणवीरो निजनायकत्रयमादिदेश स्वसमीपमानेतुमेतौ । तदाज्ञासमकालमेव त्रयोऽमी नायकास्तयोरभिमुखं गतवन्तः । इमानात्मसम्मुखमागच्छतो विलोक्य सम्भ्रान्तौ बभूवतुस्तौ । तयोरभ्यर्णमुपेतास्त्रयोऽमी नायकाः । एषामन्यतमस्तौ बभाषे- ' भ्रातरौ ! न भयं कुरुतम् ! नायाता वयमाहन्तुं भवन्तौ । किन्तु स्वमहाराजान्तिकं नेतुं वां वयमागताः स्मः ' इति ।

अथ तयोः शूरसिंहेन सभयं पृष्टम्- ' कतमस्य महाराजस्यान्तिकं नेतुमभिलषथ नौ भवन्तः ? क्व च सन्ति भवन्तः ? ' इति ।

नायकः । वयममरकण्टकाधिपतिमहाराजश्रीरणवीरसिंहस्यानुचराः स इति तदाज्ञयैव वां तदुपकण्ठं नेतुं वाञ्छाम । मा भैष्ट युवां मनागपि ! अस्मन्महाराजः सुतरां दयालुर्वियते । आगम्यतामस्माभिः सह भवद्भ्याम् ।

' यदभिरुचितं भवताम् ! ' इत्यभिधाय भटाविमौ मौनवदनौ तैः सह रणवीरनिकटमागतौ । रणवीरस्य भव्याकृतिमवलोक्य सभयमाघूर्णिताविव तौ प्रणम्यास्य सप्रश्रयमेकतः स्थितौ ।

रणवीरः । भटौ ! मा भैष्टम् । नाहमिच्छामि मनागपि वां पीडयितुम् । केवलं दुष्टस्यास्य तस्य सकाशात् विमोच्य वां सन्मार्गमारोपयितुमभिलषामि । कथ्यताम् । कोऽभिलाषो वर्तते युवयोः ? ।

भटौ । ( प्रणम्य । ) महाकृपालो ![1] क्लीबोपहृतौ दासाविमौ । तथ्यं प्रभोर्वचनम् । दारुणप्रपञ्चाः श्रीमन्तमाराम । अनवच्छिन्नमनुगानुसृतौ हि सदावाम ।

---

१ अलीक प्रवाद ।

रणवीरः। समीचीनम्। तदद्य युवामहं स्वसेनायां प्रवेशयामि; परं [illegible] विधेया कृतघ्नता कदापि। अन्यथा पशुमारं मारणीयमन्ते भवन्तावामिति स्मरणीयमेव ॥

भटौ। प्रभो! परमेश्वरं साक्षीकृत्य प्रतिजानीव आवाम्—' नैव कदापि श्रीमतां कृतं घातितां करिष्याव ' इति।

रणवीरः। वरम्! इदानीमहं प्रश्नद्वयं प्रष्टुमभिलषामि। अपि सत्यमुत्तरं दास्यते न वा?।

भटौ। आवामक्षरशो भूतार्थमेवात्रभवते निवेदयिष्याव इति प्रष्टव्यौ नि शङ्कमनुगतौ।

रणवीरः। कुत्रास्ति सम्प्रति युष्मदधिपतिः क्रूरसिंहः? असौ कियत्कालपूर्वमाहृतवानेकां राजतनयामिति कुत्रेयं निरुद्धा नृपनन्दिनीदानीमिति द्रुतं निवेदयतं मे युवाम्। तयोरन्यतरो भटः प्रोवाच प्राञ्जलिः— ' आम्, ज्ञायते सकलं तद् वृत्तम्। राजेन्द्र! श्रूयताम्— इत षण्मासपूर्वमस्मदीयसेनापतिर्विजयनगराधीश्वरस्य तनयां महाराजश्रीचन्द्रसिंहस्य च राजमहिषीं श्रीमतीमार्यां कुमुदिनीमपजहार। राजनन्दिनीयं निरुद्धाऽस्ति अस्मदीये महति गिरिदुर्गे तद् गिरिदुर्गमितो बाह्यवर्त्मनाऽतिदूरं वर्तते। बहुदिनगन्तव्योऽयमध्वा। परं दुर्गमिदमभ्यन्तरीयसुरङ्गामार्गेणाल्पकालेनैव गन्तुं पार्यते। तत्रैव निरुद्धा आर्या कुमुदिनी। तत्रानीय राजतनयामिमां बहुशः प्रार्थयाञ्चक्रे क्रूरसिंहः। परं सुतरां न्यक्कृतोऽयं तया। नाप्युपेक्षितम् तया तदीयमभ्यर्थनम्। अथ क्रूरस्तस्यै षाण्मासिकमवधिं ददौ। आर्याया कुमुदिन्याः परिचर्यार्थं निजभार्यां नियुक्तवानयम्। यामसौ पुराऽचीकमत प्रेम्णा परमिदानीं तदाननमनुजन्मनि न दिदृक्षते। विमलेति तस्या नामधेयम्। नूनं विमलान्तःकरणेयं विमला। अत्यल्पकालसमागमेनैव सेयमार्यां कुमुदिनीं स्वप्राणेभ्योऽप्यधिकं प्रेम्णा कामयते। तदर्थमेषा प्राणानपि निश्राणयितुमुद्यता विद्यते। तस्य दुर्गस्य परितोऽतिदुर्गमा ज्वलनज्वालाजालजटाला निखाताऽमुना क्रूरेण परिखातिगम्भीरा। षण्मासा अतीता अथ तद्वृत्तान्तघटनाया घटितायाः। अथार्यां कुमुदिनीमुपगम्य चतुर्विधं सानुनयं सभर्त्सनं समयाचत क्रूरसिंहः। परं [illegible] जातः कश्चिदपि प्रभावः कुमुदिनीमनसि तदीयवचसाम्। ततः क्रूरोऽयमतीवक्रुद्धः सन् बलादिमां धर्षयितुं यावत्तस्या अभिमुखमभिपतति तावदेव विमला मध्ये निपत्य बहुप्रकारं क्रूरसिंहमुपदिदेश। परमस्य क्रूरस्य कठोरे वज्रमयहृदये न जातो मनागपि प्रभावः। प्रत्युत विमलाया वचनैरधिकरोषारुणनयनः संकुप्य तां निगडयित्वा कशयाऽऽताडयितुमादिष्टवान्। गुप्तप्रियया विमलया तूष्णीमेव सेहेऽयं कशाप्रहारः। अथार्यां कुमुदिनीं निर्भर्त्सयितुमारेभे क्रूरः क्रूरसिंहः। नाजीगणदेव किमपि तदीयतर्जनम्। ततो नृशंसेनामुना वृक्षशाखायामालम्बितेयमार्या।' इत्याख्याय क्षणं मौनमतिष्ठत्।

रणवीरः। (सरोषम्।) आः? कोऽयं अत्याचारः! रे कृतघातिन् क्रूर! महानयमत्याचारो विहितस्त्वया! आगतमिदानीं तव मरणम्! (भटं प्रति) ततः ततः?

1 सत्यम्। " तथ्यं सत्यदाऽनृतम् इत्यम् । " इत्यमरः। 2 कृतघ्नताम्। 3 सत्यम्।

भटः । ' आर्यां कुमुदिनीं तदाशासान्तरालवर्तिनीं समक्षमुपहृतवान् दुरात्मा । परं नितान्तमपि नाङ्गीकृतमस्य कथनमत्रभवत्या । अन्ते दारुणं सविचारं प्रदर्शितवानयं क्रूरः । श्वः प्रभाते नृशंसोऽसौ रोमाञ्चजननेन घोरकर्मणा श्रीमत्या देवीबलिदानं विधाता । कथं तया विधीयते बलिदानं कीदृशञ्च घोरं कृत्यमिदमिति विदितवृत्तान्तया तया विमलया विमलया सहृदयया कुमुदिनीप्राणत्राणार्थमर्थितो दीनं दीनया क्रूरः नृसिंहः किन्तु मनागपि नागता दयाऽस्य निर्दये हृदये । हिंसा हि सा निष्कलङ्कामार्यां मार्यामपि श्रीमत्या कुमुदिन्या सहैव बलिं दास्यति देव्यै । अत्रैवानेष्यतेऽत्रभवती राजकुमारी बलिदानार्थम् । विमलापि निशीथेऽत्रानेष्यते । येयं पुरतो दृश्यते मूर्तिस्तदग्रत एव बलिर्दास्यते इति श्रुतं मयैव किञ्चिदाराममाश्रित्य । नियुक्तौ चावामत्र देवीपुरतः प्रहरिकार्ये । ' इति समाख्याय तूष्णीमतिष्ठत् ।

भटोदितं सकलमुदन्तं सावधानं निशम्य रणवीरः क्षणं विमृश्य मनसाऽऽकल्पयत्— ' आर्ये ! अतीव कष्टमनुभूतमत्रभवत्या । तत्प्रतिकर्तुमयं सम्प्राप्तस्ते रणवीरः । रे नृशंस नृसिंह ! सावधानो भवाधुना ! न न्यूनत्वमकार्षीः खलु त्वं न पीडयितुम् । समुपेयुषीयं तवान्तवेला साम्प्रतमिति जानीहि । पापिष्ठ ! अत्यल्पकालमेवाधुना तिष्ठतु तव दुश्चेष्टितम् ' इति ।

इत्यालप्य रणवीरो निजनायकैः सह तौ भटौ समादाय गुहाया बहिराजगाम । निर्विघ्नमसौ बहिरागतमवलोक्याधिकतमानन्दं रत्नप्रभा । पप्रच्छ चास्य कुशलम् । अथ सकलं वृत्तमाचख्यौ रणवीरस्ताम् । कुमुदिन्या दुःखमाकर्ण्य बाष्पजलपूर्णे अभूतां नेत्रे रत्नप्रभायाः । तदीयमश्रुजलं निजवसनाञ्चलेन परिमृज्य तामाश्वासयाम्बभूव रणवीरः । अथायं बहिरागत्य विविक्तभूतले निजसैनिकमण्डलमध्यवर्ती निषण्णः सह रत्नप्रभया । तत्रान्तरे सन्ध्याभ्रकपिशमतिदूरे पार्थिवं रजः समुद्भिन्नमालोक्यत रणवीरेण । कोऽपि बलमादायाभियततीति नूनमिति वितर्कितवानयम् । नृशंसः नृसिंहो भवेदसौ कदाचिदिति समवधार्य स्ववरूथिनीं सज्जीभवितुमादिष्टवानयम् । क्षणादेव रणवीरसैन्यं सेनापतिना सममभिपतत सैन्यस्य साम्मुख्यं कर्तुं सज्जं समवातिष्ठत । अभिपतन्ती पृतना नेदीयसी संवृत्ता सम्प्रति । तदन्यतरादेकः सैन्धवारोहो—योऽसौ तदधिपतिरभूत्—स्वतुरङ्गमादवतीर्य रणवीरनिकटमागत्य तस्थौ । रणवीरं विलोक्यैवाकस्मादतिहर्षनादं विधाय तमालिलिङ्गायमश्वारोहः । रणवीरोऽपि स्ववृद्धप्रधानवर्यं श्रीप्रतापसिंहं निरीक्ष्यैव मुमुदेतराम् । आसीदयं सादी स्थविरो मन्त्रिवरः श्रीप्रतापसिंह एव । अथ मन्त्रीश्वरो रणवीरं कुशलमापृच्छ्य स्वसेनां तत्रैव सन्निवेशयितुमादिशत् । रणवीरसेनया सह समगंस्त मन्त्रिसैन्यम् । सम्भूयामी मुमुदिरे सर्वेऽपि सैनिकाः । अनन्तरं

१ सन्ध्याभ्रवत् कपिशं ताम्रवर्णम् । २ रजो धूलिः । ३ समुद्भिन्नम् । ४ वरूथिनी सेना । ५ पृतना सेना । ६ अश्वारोहः । ७ सङ्गतम् । ८ एकीभूय ।

मन्त्रिवरस्य स्वागतं विधाय समपृच्छदमुं रणवीरः ' आर्य ! कुतोऽकस्मादिहागतं श्रीमतामिति । '

प्रतापसिंहः । चन्द्रसिंहभ्रातुरन्वेषणार्थमहं सेनया समं निर्गतवानस्मि । समर्पितवानहं पुराणसचिवहस्ते विजयनगरराज्यधुरम् । बहुशो विचिन्वताऽपि मया नोपलेभे प्रवृत्तिरपि भ्रातुरिति निराशमनसा भवन्तं साक्षात्कर्तुममरकण्टकराजनगरं प्रयातम् । तत्रानुसन्दधता– ' भ्रातृगवेषणाय निर्गतो भवानिति व्यज्ञायि मया । अथाहं भवन्मन्त्रिवरं साक्षात्कृतवान् । सङ्गतोऽहं सम्यगमुना । तत्र दिनद्वयमुषित्वा निष्क्रान्तोऽहं ततो मन्त्रिवरानुज्ञामादाय । पथि चागच्छता– ' अत्र सन्निधावेव क्रूरसिंहस्य विपिने गुप्तैका गुहा । तस्यामेव नृशंसोऽसौ निजानुचरैः सह निवसतीति ' प्रस्ता मया प्रवृत्तिः । ततो विचिन्तितं मया–' यत्राय दुरात्मा निवसति तत्रैव राजपुत्र्या कुमुदिन्याऽपि भवितव्यमिति । '

इत्यन्यथाऽहं पापिष्ठममुं व्यापादयितुमना यावदमुना यावत्प्रयामि तावदेव दूरतो भवत्सेनामिमामालोकयम् । सैन्यमिदं क्रूरसिंहस्यैव स्यादिति विमृश्य स्वसेनां सुसन्नतया तावदलमभिगन्तुमादिश्य त्वरितगत्या वयमिहाभ्यागच्छाम । निकटतरमागच्छद्भिरस्माभिर्भवानालोकि इति नास्माकं हृदि ममौ हर्षः । राजेन्द्र ! कथ्यतामिदानीं किंवृत्तान्तो भवान् ? अपि श्रीमतीं कुमुदिनीमन्वेष्टुं शक्तो न वा भवान् ? ।

अथ निवेदित सकलमुदन्तजात प्रतापसिंहाय रणवीरेण । रणवीरचातुरीं विलोक्य सुतरामानन्द स्थविरो मन्त्रिवर । अथोभावपि भोजनार्थं प्रविष्टौ पटमण्डपम् । भोजनाविकृत्य सर्वेऽपि सैनिका बहि प्राङ्गणे समगच्छन्त । रणवीरप्रतापसिंहावपि कृताशनौ पटमण्डपाद् बहिरायातौ । इमौ निरीक्ष्य सकला अपि वीरा हर्षोच्छलकिलारवं वितन्वाना निजानिजस्थानानि भेजिरे । तत्राऽऽस्नार्थमास्तीर्णायां मृदुलतूलिकायां प्रधानेन सममुपविष्टवान् रणवीरः । इयत्कालावधि नोपागताऽभूदवनविरथमिव रत्नप्रभा मन्त्रिणः । रत्नप्रभाऽपि पुरुषवेषा तत्र निषण्णैव सावहिता शृणोति स्मासीत्समुदन्तम् । तस्मिन्नवसरे दृग्गोचरं प्राप्तेयं मन्त्रिवरस्य रत्नप्रभा । रत्नप्रभामवलोक्यैव चकितीभूय मनसि विचिन्तितं चतुरमन्त्रिणा— ' अये ! कोऽयं भवेत् ? कोऽप्ययं राजकुमार इवालोक्यते ? अहो ! कियन्मधुरमस्य दर्शनम् ! ' इति ।

इत्थं विचिन्त्य रणवीरमप्राक्षीन्मन्त्रिवर – ' रणवीरसिंह ? कोऽयमसौ भवत्पुरः निषण्णो राजकुमार ? कस्य तनयोऽयम् ? ' इति ।

प्रधानप्रश्नममुमाकर्ण्य त्वरया रणवीरः शुभं विनिगमयन् ■ तदात्व किमपि प्रतिवचनं नाऽशकदुदीरयितुम् । अनन्तरमिममालोक्य विचारे निमग्ने मन्त्रिवरे । परमत्रान्तरे तु रत्नप्रभा प्रधानप्रश्नमनुश्रुत्य स्वकपोलौ सस्मितं विदधे । प्रस्मितमीक्षमाणो विलोक्य भूयो विस्मयसागरे निरविशत् प्रधानः । कोऽयं राजनन्दनो भवेदिति मनसैव विचारयन्नयं निम–

हस्तारविन्दयुगलमुद्यम्य रत्नप्रभामाशीर्वचसा सम्मानितवान् । क्षणानन्तरं पृष्टं मन्त्रिणा-'कोऽसि त्वमिति ।'

रत्नप्रभा । अमरकण्टकाधीश्वरस्य महामहिमशालिनो महाराजश्रीरणजितसिंहनरेन्द्रस्य नन्दिनीयमभिवादयतेऽत्रभवन्तम् ।

प्रतापसिंहः । ( साश्चर्यम् । ) आ एवं किल ? त्वदीयनन्दिनी रत्नप्रभा किमु ? अहो ? त्वमपि मत्स्वामिना सममेव समायातासि किमु ? कथं नागच्छे. ? वीराग्रगण्यस्य पितुः पुत्र्यसि खलु । धन्याऽसि वत्से ? चिरायुषौ कुर्यात्तुभावपि भवन्तौ जगदीश्वरः ।' इत्य-भिधायोभयोरेव शिरसि हस्तं विन्यस्य मन्त्रिसत्तमो नूनमौ तौ वृन्दतौ पीयूषवर्षिणा चक्षुषा निरैक्षिष्ट । अथ हर्षोत्कलिकाकुलहृदयः पृष्टवान् रणवीरं मन्त्रिवर -' राजन् ? किमिदानीं कर्तुं निरणायि भवतेति ? ।'

रणवीरः । मन्त्रिवर्य ? सकलमहं सानुसन्धानं परीक्ष्यागतोऽस्मि । अद्य प्रभाते भार्यायाः कुमुदिन्या बलिदानं विधास्यते । इदन्तु मे मनसि वर्तते- ' श्रीमता सकलेनात्मबलेन समं गुप्तगृहद्वारमुपरुध्य स्थीयतां सावधानम् । गुप्तगृहाद् बहिरागच्छन्तो यथासम्भवं निगृह्य-तामुत प्रातःकाले निहन्यतामसौ भवता । अहञ्चात्र सैनिकैः सार्धमभ्यन्तरे प्रविशामि ।' इति ।

अत्यन्तरे किं कर्तुं निर्धारितमात्मनेति सकलामायोजनां न्यवीविदन्मन्त्रिवराय रणवीरः । रणवीरायोजनामुपश्रुत्य सुतरां सन्तुष्टान्तरङ्गो मनस्येवाशु प्रशस्य तत्समक्षमेवाभितो गुप्तगृहं रुरोध मन्त्रीश्वरः । गुप्तगृहमभितः करकलितनिष्कोशकरवाला प्रहरिवीरमण्डली रक्षणं कर्तु-मारेभे । अथ रणवीरः प्रतापसिंहानुमतिमादाय रत्नप्रभया स्वसैन्यं गृहीत्वा गुप्तगृह माविशत् । अनुक्रमं सततद्वयं वीरभद्रा गुप्तगृहाभ्यन्तरे प्रविष्टाः । अधस्तादवतीर्यासौ विपिनमेता फाल्गुनिकाधिष्ठितद्वारमपि प्रविष्टाः । तत्र पुरतो गच्छन्तोऽमी चन्द्रालोकर-हितमपि सुप्रकाशमयं प्राङ्गणं प्राप्ताः । तदङ्गन सम्प्राप्तेषु सकलवीरेषु रणवीरस्तानामनिर्धा-रितमकथयत्- ' अयि विश्वास्यतमा वीरवराः सैनिका नायकाः ? अद्यास्माभिरनिमात्र शौर्यं दर्शनीयमस्ति । पापात्मन एतस्माद् विमोचनीयाऽस्माभिरार्या कुमुदिनी । तत्पश्यन्तु भवन्तः । भवतां केचन वीराः पुरोदृश्यमानस्यास्य पर्वतस्य कन्दरमन्दिरेषु, कतिपये चासु पार्श्ववर्तिनीषु कोष्ठशालासु निलीयन्ताम् । अहञ्चात्र सम्मुखवर्तिन्या देवीप्रतिमायां निलीये । दारुनिर्मिता मूर्तिरियमन्तः सान्तराला वर्तते । ततो यदाहं स्वभुशुण्डिकाया निःस्वनं कुर्याम् ? तदानीमेव भवद्भिरखिलैः सद्य एव बहिर्निर्गम्य मदन्तिकमागन्तव्यम् । तदनु प्रातरूपमहं कथयिष्यामि युष्मान् । तद्यथि वीराः ? त्वरितं गत्वा निलीयन्तां भवन्तस्तत्र तत्र । यत सम्प्राप्तोऽयमर्धरात्रकालोऽधुना मुहूर्तेन । स्वस्थानान्निर्गतो मन्ये चित्रानुचरैः समभिहागन्तुमसौ दुरात्मा शूरसिंहः ।' इति ।

महाराजनिदेशानुसारमखिलं बलं निलीनं यथोचितं गिरिगुहागृहेषु कोष्ठशालासु चानु-

क्रमम् । क्षणेनैव जनसम्मर्दपूर्णं प्राङ्गणमिदं प्रच्छन्ने वीरमण्डले निर्जनमजनि । केवलं तत्र रणवीरो रत्नप्रभा सेनापतिर्मानसिंहस्तौ च निगृहीतौ भटौ—इत्येवं षण्णराः स्थिताः । अथेमौ भटौ समगादीद् रणवीरः—'भ्रातरौ ? नास्माकं वहिः शूरसिंहकिङ्करत्वेन प्रकटयन्तौ भवन्तौ प्रागिव प्रहरितामकुरुतां तत्रैव सज्जनं कुरुताम् । परं यदाहं संकेतयिष्यामि तदा तु भवद्भ्यां मस्मदनुचराभ्यामिव पालनीयोऽस्मन्निदेशः ।' इति ।

तत्कालमेव भटाविमौ रणवीरं प्रणम्य ततोऽपसृत्य स्वस्थानमासाद्य पूर्ववत् प्रहरितां कर्तुमारभेताम् । गतयोस्तयो रणवीरो मानसिंहं सेनापतिञ्चाभाषीत्—' युवामपि कार्यमेकमर्पयितुमभिलषामि ' इति ।

' आदिश्येतामिमौ दासौ ? ' इति ताभ्यामवोचि ।

रणवीरः । भवन्तौ रत्नप्रभा चेति त्रयो जना यत्रेमौ प्रहरिणौ पर्यटतस्तदीयपृष्ठवर्तिनि दरीगृहे तदलक्षितात्मगमनाः प्रच्छन्नं निलीनास्तिष्ठन्तु ? कुर्वन्तु चात्मभुशुण्डिकां सुसज्जितामापूर्य गोलिकाभिः । कदाचिदेतौ प्रहरिणौ कपटजालमाचरेतां चेत्तदा एव तौ भुशुण्डीगोलिकया हन्तव्यौ भवद्भ्याम् । गच्छन्तु, सम्प्रति भवन्तोऽपि साधयन्तु स्वकार्यम् ।

मानसिंहसेनापती रत्नप्रभया समं तत्र गत्वा पर्यटतोः प्रहरिणोः पृष्ठवर्तिनि दरीगृहे प्रच्छन्नं निलिल्याते । अथ सेनापतिमानसिंहौ निजनिजभुशुण्डीं सुसज्जितां विधाय भटौ तौ संधाय समस्थाताम् ।

स्वमनीषितानुकूलं निष्पादिते सकलकर्मणि रणवीरो देवीमूर्तिनिकटे गतवान् । देवीप्रतिमां यन्त्रकीलेनापावृत्य द्विः कृत्वा प्रविश्य चान्तस्तिष्ठत्येवैष यन्त्रकीलमुपपीड्य यथापूर्वं मुद्रितवान्[१] । आत्मानं सम्यक्तयाऽभ्यन्तरे निविष्टमवलोक्य पुनर्यन्त्रकीलेन मूर्तिमुन्मुद्रय् रणवीरो बहिर्निर्गम्य पुनरेकवारं सर्वतः पर्यट्य परीक्षितवान् । अत्रान्तरे तत्र कस्यचित् पादध्वनिरिवाश्रूयतामुना । तत्क्षणमेव रणवीरो निजभुशुण्डीं नि सार्य गोलिकामापूर्य स्ववक्षसा तां परिकीलितवान् । अथायं निःशब्दचरणं शनैर्देवीप्रतिमाभ्यर्णमुपगम्य त्वरया मूर्तिमिमामुद्घाट्य तदभ्यन्तरे निलीय— " किमिदानीं भवतीति " सूक्ष्मेणैकेन रन्ध्रेण निरीक्षाञ्चक्रे निपुणम् ।

* मासोऽयं श्रावणः । कदाचित्क्वचिन्मेघमाला सझर्झररवं वर्षति । काञ्चिद् प्रशमं प्राप्नोति वृष्टिः । अन्तरिक्षतलं जीमूत[२]जालच्छादितमालोक्यते । अभिनवसलिलपूर्णानि सरांसि कामपि शोभां पुष्णन्ति । झर्झररवबधिरितदिगन्तराः परःसहस्राः संसरन्ति पार्वतनिर्झरैधाराः[३] परितः पर्वतपरिसरारण्यस्थलीषु । जलधरपटल[४]निलीनोऽपि रविरयमातितांवितापं तनुते । ईदृशे समये प्रियाविरहविक्षिप्तमना उन्मत्त इवासौ चन्द्रसिंहो मन्दमन्दं प्रचलन्नेव कस्याश्चन गिरिनिर्झरिणि[५]निर्झरिण्यास्तीरमुपाजगाम । तत्रागत्यासौ मुहूर्तं विश्रमितुं विचिन्त्य

१ मुद्रितवान् । २ जीमूतो मेघः । ३ ओघ समूहः । ४ पटलं समूहः । ५ नद्या ।

वासांस्यवतार्य शैवालिन्या निर्मलसलिले स्नानं व्यधात् । येन क्लान्ति किञ्चिच्छिरस्य तनुशान्तिसुखमयं लेभे । अथ पुनर्वस्त्राणि परिधाय कूलमध्यास्य व्यचिन्तयदसौ— 'उष्णता मनागियं क्षयिमानसाऽस्त्वेव चेदहं पुनरप्यतः प्रतिष्ठेय । अहह ! कियन्मार्गमहं प्रियां कियन्ति च स्थानानि भ्रान्तानि मया । परमद्यावधि प्राणप्रिया मे कुमुदिनी नैवोपलब्धा । प्रेमप्रतिमायाः प्रनष्टाया ममास्याः षण्मासाः सम्पूर्णाः खल्वद्य ? ? षाण्मासिकोऽयं प्रियतमाविप्रयोगो मे प्रतिभाति कल्पकालविश्लेषकल्पः । प्रतिपलं प्रबलं ज्वलतीव मे हृदयदुःखदवानलसन्तापः । अहह ! किमियत्कालपर्यन्तं जीविता स्यान्नु मे कुमुदिनी ? हन्त ? अवगमयतु मां कोऽपि प्रियतमावस्थाम्; प्रशमयतु चेमं प्रबलवेदनानलमपि कश्चिन्मे । प्रिये कुमुदिनि ? क्वासि खलु ? एहि, एहि । त्वद्विरहानलदग्धहृदयहतकस्य तव प्राणप्रियचन्द्रस्य निकटमागत्य प्रेम्णाऽऽलिङ्ग्यासुं धारय त्वमिति ।'

अथ क्षणं तोषं स्थित्वा पुनरसौ वक्तुमारेभे— कुमुदिनि ! ममैवायं दोषस्तव नृशंसकरपञ्जरपतने । त्वयाऽहं सावधानीकृतोऽपि निद्राधीनोऽभूवम् । पुनरवसरमुपलभ्या-, सुना नृशंसेन साधितं स्वसमीहितम् । अहह ! कीदृशी वैचित्रीयं भाग्यचक्रगतेः । ? परमात्मन् ? कुतो नु मादृशः पामरजनोऽधिगच्छतीश्वरस्याचिन्त्यलीलाम् ? तदप्यपि प्रभो ! नारोप्यतां निकषोपलतामिदानीमयं दीनबालकः । स्वल्पकालमपि नालमहं सोढुं स्वप्रियाविरहवेदनामिदानीम् । निजहृदयदयितां विनाऽहं निखिलं जगदिदमतिघोरतमःसाम्राज्यमालोके । आनय, आनय । अयि दयालो जगदीश ? मदीयमनोमोहिनीं मत्प्रेमप्रतिमाप्रतिमानम्लानिमुखैश्वर्यालोकलोचनां मदुपकण्ठमानय मृगलोचनाम् । मा खलु पीडयाधिकं दुःखिनं प्राणिनमेनम् । त्वमापन्नानां संकटार्तिहारीति किमिति तदाऽस्य विपन्नजनस्य संकटं निरस्यैनं निजदयितसमया समं न सङ्गमयसि ? ( विमृश्य ) अरेरे अत्याचारिन् क्रूरवैरिन् क्रूरसिंह ? कियानत्याचारो विधीयते त्वयाऽधुना मत्प्रियाया उपरीति नालमहमनुमातुमपि तमत्याचारम् । प्रभो ? तवास्यां सृष्टौ पुण्यशालिनः प्रणयिनो जनाः कष्टं सहन्ते; दुरितकारिणः पुनः सुखमुपभुञ्जते मानवा इति कीदृशोऽयं न्यायः खलु ते ! इत्यभिधाय पुनः क्षणं शान्तिमालम्ब्य गदितुमुपचक्रमे 'अपसरतु, अपसरतु । संसारोऽयमपसरतु मदीयनयनसरणेरतिदूरम् । नाहमभिलषामि सम्प्रति सुखलाभम् । संन्यस्तो भूत्वाऽहं दिशः स्वप्रियतमां विचेष्यामि । नैवोपलप्स्यते चेदियं तदाहं तुच्छं स्वजीवनमपि विगलयिष्यामि ।' इति मनसैवालप्यायं चन्द्रो यत्रोपविष्टोऽभूत्तत्रैव भुवि व्यलुठत् । विलुठनसमकालमेवासौ निद्रापरतन्त्रः समवर्तत ।

अथैकहोरानन्तरं पुनः प्रबुद्धवानयम् । तनिमानमाप्तवत् सम्प्रति तपनातपतापः । अतः समुत्थाय चन्द्रः कुमुदिनीगवेषणार्थं योगीन्द्रनिर्दिष्टवर्त्मनाऽग्रतः प्रतस्थे । प्रचण्डवे-

१ शैवालिनी निर्झरिणी नदी । २ तीरम् । ३ प्रलयकालवियोगतुल्यः । ४ प्राणपालनम् । ५ तनुताम् ।

७

यावत्सौ समासन्नसायसमये प्रचण्डानलदेदीप्यमानार्चिः सहस्रधातपरिवृताया परिखायाः समीपभुवमाजगाम । समयेऽस्मिन् शूरसिंहो दुर्गाभ्यन्तरे कुमुदिनीबलिदानसंभारं कुरुते स्म । चन्द्रः परिखानिकटमुपगम्य नल्वपरिमित[1] विस्तीर्णं पावकमवालोकयत् परिखायाः । परिखायामस्यां प्रचण्डं दिदीपे जातवेदाः । चिर्प्रैमानोरमुष्य शिखास्तन्ततयोऽन्तरिक्षं चुचुम्बुः । अतिशयज्वलनज्वालतापतया न प्रबभूव चन्द्रो गन्तुं परिखासमीपदेशम् । विदूरे स्थितोऽयं भाषितुमुपक्रान्तवान्– ' अयि प्रभो ! कथमहमिमां कृशानुविरोचितां परिखामुल्लङ्घितुं प्रभवेयम् ? इदानीमेव स्फुटमज्ञायि मया–मरणं विना नास्ति मे [illegible] स्थानमिति । नाहं प्राभवमत्र जन्मनि सुखस्वप्नमपि वीक्षितुम्, न चापि शक्ष्यामि तं पुनरवलोकयितुमिति मन्ये । तत्किमर्थमहं प्राणिमि ? किमालोकनीया जीवतैव मयाऽसह्यपीडामनुभवन्ती कुमुदिनी ? केवलमात्मजीवनार्थमेव परिहेया किमु स्वप्रियतमा या प्रेमा ? हन्त ! यदीदं विश्वास्यति मे कुमुदिनी–निजजीवनार्थं मदीयचन्द्रः स्वप्रियां शत्रुपाणिपञ्जरान्मोचयितुं नाशक्नोदिति कियन्नु क्लिश्येत्तदासौ ? धिङ् माम् ' अये ! किमिति ममेयमद्य हृदयादुद्भवति मिथ्याभावनेदृशी ? ( विमृश्य । ) नैव नैव । नाधुनामुना मे प्रयोजनमहितजीवनेन ? मृत्युरेव ममेदानीं सन्मित्रं वरीवर्ति । परिखायामस्यां पतत एवोत्क्रमिष्यन्ति मम प्राणाः । न सम्भाव्यते हि जीवनमितो मे । प्रिये कुमुदिनि ! क्षम्यतामयं त्वया मन्दभागधेयश्चन्द्रः । विसर्यतामाशाय निपातं करणात् ! ' इति ।

पुनः क्षणं मौनमाकलय्य निजगाद– ' संसार ! नमस्करोम्यहं भवन्तमपि । अयि परमदयालो परमात्मन् ! सकलभुवनवन्दनीय त्वां हृदाहं वन्दे । हन्त ! क्षणादेवायं चन्द्रः कथावशेषं सञ्चरिष्यति । ( विमृश्य । ) एहि, आत्मन् ! किमिति सम्प्रति विलम्बसे ? ( गगनाभिमुखमालोक्य । ) सर्वशक्तिमन् दयानिधे जगदीश्वर ! शरण्यं त्वां क्षणानन्तरमेव शरणमागन्ताऽयं त्वदीयबालः किन्तु मरणात्पूर्वमेका निवेदना सद्भ्यर्थना भगवतः । सर्वान्तर्यामिन् प्रभो ! यदा यदा समुत्पद्येत चितावपि मे शरीरं तदा तदा कुमुदिन्येव जननान्तरेऽपि मत्प्राणप्रियाऽर्द्धाङ्गिनी भवतु । कारुणिक पितः ! त्वत्तो न विद्यते सम्प्रति कोऽपि सान्त्वयिता मम कुमुदिन्या इति तामाश्वासयतु प्रभुः । ( कुमुदिनीं स्मृत्वा । ) प्रिये ! त्वामपि न शक्तवानहं संरक्षितुम् । प्रियबन्धो रणवीर ! त्वमपि न साक्षात्कृतो मयान्तकाले । जन्मदायक पितः ! भवतो वैरमपि न शोधितममुना भवद्भ्रंशजेन । हन्त ! मन्दभाग्योऽस्मि, निर्दयोऽस्मि, कृतघ्नश्चास्म्यहमिति क्षन्तव्योऽहं तातेन । अन्धकार ! त्वामेव सततं विलोकयामि विश्वतः । हा हत ! निवारयन्ति मां मदीयकुमुदिनी परिखायामस्यां निपतनात् ? अयि हृदयदयिततमे ! क्वाऽसि खलु ? नृशंसोऽयं त्वदुपरि कीदृशं व्यवहारं कुरुते ? हा ! भस्मीभवति मम हृदयं विरहदहनेन । कुत्रेदानीं मया संगमिष्यसे

1 नल्वं चतुःशतहस्तमित परिमाणम् । ' नल्वं किष्कुचतुःशतम् ' इत्यमरः । 2 आग । 3 अग्नि ।

स्वम् ? हाहा देवि ? मां परिणीय त्वमतीव दुःखिताऽसि । प्रिये कुमुदिनि ? तव प्रवृत्तिरपि नोपलब्धाऽद्यापि मयेति कथमहं शक्नुयां त्वां रक्षितुम् ? हृदयेश्वरि ? प्राणावलम्बनमसि मे । क्षणमपि त्वां न विस्मरति मम हृदयम् । उपविशन्, संविशन्, विचरंश्चाहं त्वामेव केवलं विलोकयामि । त्वां विना न किमपि शक्नोम्यहं द्रष्टुम् । सर्वाणि मदिन्द्रियाणि विमूढानि त्वदृते । कुमुदिनि ? चिरकालायाधुनाऽहं वियुक्तो भवामि त्वत्तः । क्षमस्व माम् । पातु त्वामखिललोकपालकः सृष्टिचालकः प्रभुः ? ' इति ।

अथायं चन्द्रः ' विजयते जगदेकनियन्ता जगदीश्वरः ' इत्यभिधाय विलोचनाभ्यामश्रुजलजालं विमुञ्चन्नेव धावमानो यावत्परिखायामात्मानं निपातयितुं प्रवर्तते तावदेव पृष्ठतोऽतिभयङ्करः कर्णविदारको ध्वनिरेकः समुदपद्यत । तदनन्तरं ' विरम विरम । न कुरु साहसिकं कर्म । विमृश पूर्वम् ' इति कस्यापि वचनमित्याकर्ण्यत । तद्वचःश्रवणेनैव चमत्कृतोऽयमनुपलभन् पदमेकमपि ततः ' कस्येदं वचनम् ? ' इति विज्ञातुमातुरतया यतोऽयं ध्वनिरापातस्तदभिमुखमालोकितवान् । तद्विलम्बेन क्षणे पुनरमी शब्दा अतिमन्दीयमसुनाऽऽकर्णिताः ।

तत्कालमेव परिचितचरो योगीन्द्रश्चन्द्रसन्निधौ समेत्य तस्थौ । तमवलोक्यैव चन्द्रस्य शोको हर्षत्वेन परिणतः । योगीन्द्रमालोक्य दण्डवत् प्रणम्य बभाषे चन्द्रः ' भगवन् ? योग्यकालमेव सन्निहितो भवान् । कथमियमुल्लङ्घनीया भयानकपरिखेति नावगम्यते मया । तन्निर्दिश्यतां मार्गो मे दुर्गेऽस्मिन् प्रवेष्टुमत्रभवता । निर्दिश्यतां प्रभो ? निर्दिश्यतां दुर्गप्रवेशमार्गो दुःखितायाऽस्मदाकाङ्क्षायास्मै । भगवन् ? करोतु मय्याहार्य्यं प्रभुरिति '।

योगीन्द्रः । राजकुमार ? किमर्थं निराशो भवसि ? त्वां दुःखाकुलमालोक्य विज्ञाय चात्र परिखायां निपत्य स्वमरणमिच्छन्तं प्रभुरसौ दयया पन्थानं ते दर्शयितुं मां प्रेरितवान् ।

चन्द्रः । ( साभिवादनम् । ) प्रभो ? दयालुरसि । अनुगृहीतोऽयं त्वया बालकः श्रीमता ।

योगीन्द्रः । चन्द्र ? पश्य-येयं तरुषण्डमण्डिता भूमिरालोक्यते तत्राऽस्ति निहितैका महती शिला । तां तत्पार्श्वस्थया यन्त्रकीलिकयाऽपसार्य सुरङ्गां द्रक्ष्यसि दुर्गाभ्यन्तरगामिनीम् । तया सुखेन दुर्गान्तः प्रवेक्ष्यसि ।

चन्द्रः । नातिवेलमुपकृतोऽयं बालो भगवता । दयालो ? सुरङ्गयाऽनया दुर्गप्रवेशानन्तरं प्राप्स्येत न वा मदीयकुमुदिनी ? ।

योगीन्द्रस्तु– ' वत्स ? मा भवाधीरः ? विश्वसिहि परमात्मनि । नायं प्रसङ्गस्तव दुर्गतौ । सुरङ्गामतिक्रम्य दुर्गं प्रविश त्वम् । तत्रैव लप्स्यते त्वया कुमुदिन्याः प्रवृत्तिः । गृहाणेमं दण्डम् । महदनेन भविता प्रयोजनं ते । यदा त्वं दुर्गं प्रविश्यानुपलभ्य कुमुदिनीं चिन्तयाकुलो भवेस्तदानीमिमं दण्डमुपयुञ्जीथाः । त्वं दण्डेनामुना यदि प्रहरिष्यसि भूतलं तदा तत्क्षणमेव– यत्राऽस्ति कुमुदिनी तत्स्थानगामी पन्था विज्ञास्यते त्वया । ततस्तेन पथा गत्वा प्राप्स्यसि कुमुदिनीम् । परं दण्डोऽयं केवलमेकवारमहनि प्रयोक्तव्यस्त्वयेति सम्यग् विज्ञेयम् । द्विः प्रयोक्ष्यसे यदि त्वमिमं दिने तदा तदानीं नु साधयिष्यति त्वत्कार्यमयं परं वक्ष्य-

णमेवासौ त्वत्तोऽन्तर्धाय पुनर्लप्स्यते त्वया ।' इति चन्द्रं सूचयित्वा ततो निष्क्रान्तः । प्रयाते तस्मिन्नसौ चन्द्रो योगीन्द्रदत्तं दण्डमादाय तन्निर्दिष्टां तदरण्यमध्यवर्तिनीं शिलामासाद्यापसार्य च तां यन्त्रकीलिकया सोपानवर्त्मनाऽवतीर्य सुरङ्गां प्रविष्टः । मुहूर्तान्तरमेवाथ तया गच्छन् दुर्गान्तः प्राविशत् ।

दुर्गाभ्यन्तरे गत्वा समन्ततो निजदृष्टिं प्रक्षिप्तवानयम् । परं नोपगतस्तस्य नेत्रगोचरं तत्र कोऽपि जनः । 'निर्जनं भवेद् दुर्गमिदं किमु ?' इति च दृढं मनसि विचारः समुत्पन्नः । सायंसमयतया समग्रमपि दुर्गमिदमिदानीं भयानकं भासते स्म । यादृशमिदं भयावहं समदृश्यत तादृशमेव घोरं हृदयमपि तस्मिंस्तस्य समविस्मयमाणमभूत् । ईदृशि घोरप्रसङ्गे दुर्गे विचरन्नयं चन्द्रसिंहो जीर्णप्रायमेकं महालयमाससाद । तत्रागत्य निरीक्षमाणोऽसौ नावालोकयत् कमपि मानवम् । पुनरथ ततोऽग्रे गच्छन् संवृतं द्वारमेकं दृष्टवान् सद्य एव तरसा द्वारमिदमपावृत्य वेश्मान्तरं प्राविक्षत् । निकेतनस्यास्य कियन्ति द्वाराणि मोचयन् विशालमेकमन्दिरं प्राप चन्द्रः । अत्रान्तरे समाकर्णितममुना चीत्कृतमेकमतिकरुणम् । 'अये ! किमिदम् ? कस्यायं चीत्कारध्वनिः ?' इति व्याहृत्य सवेगमवलोकयामास चन्द्रः । अथ विदितमनेन — 'स्वयं यत्र चत्वरे तिष्ठामि तदभ्याशवर्तिनि प्राङ्गणे कोलाहलमिव वितन्वन्ति कतिपये मानवाः' इति । इत्याकलय्य चन्द्रस्तदङ्गनाभिमुखं गतः । ततोपगम्य विलोकितममुना — 'चतुर्भिर्भटैः कापि सुन्दरी वनिता बन्दीकृत्य कुत्रापि नेतुं सन्नह्यते' इति ।

दृश्यमिदमवलोक्य प्रवृद्धमन्युः समजायत चन्द्रः । क्रुधा समगादीदसौ भटानमून् — 'किं रे लुण्ठकनराधमाः ! किमिदं विधीयते ? किमर्थमियं नारी निगडिता युष्माभिः ? कुत्रेमां नेतुमुद्यता यूयम् ?' इति ।

चन्द्रवचः श्रुत्वा सम्भ्रान्ता बभूवुर्भटाः । 'कोऽयं स्यादपरिचितः पुरुषः ? कथमसौ दुर्गं प्रविष्टः ?' इत्यादि वितर्कं चक्रिरेऽमी भटाः । अन्ततस्तेषामन्यतमो भटः सम्मुखमुपगत्य ससाहसमेनमप्राक्षीत् — 'अये ! कोऽसि त्वम् ? किं ते प्रयोजनमस्मदीयकृत्येन ?' इति ।

चन्द्रः । अरेरे आत्महतकाः ! विकरालः कालोऽहं युष्माकम् ! स्वजीवनमपेक्षध्वे यूयं यदि तदेमां प्रमदां परिमुच्य सद्य एवतोऽपसरत ! !

भटाः । परं कोऽसि त्वम् ?

चन्द्रः । नृशंसाः ! स्यामहं कोऽपि ? नावश्यकं वो विज्ञातुं तत् किमपि । तदपि विज्ञातुमिच्छथ चेत् 'साम्प्रतमहमस्या अबलायाः सहायकोऽस्मि'—इति विज्ञायताम् ।

सदर्पमेतेन वचसाऽतिमात्रं प्रकुपिताश्चत्वारोऽमी भटा झटिति ते कृपाणमाकृष्य चन्द्रसिंहमभ्यपतन् । साम्प्रतमेकमपि शस्त्रं नासीच्चन्द्रसन्निधौ, तदपि धैर्यं धृत्वा धीरोऽसौ सम

१ अजिरम्—अङ्गनम् । 'अङ्गनं चत्वराजिरे' इत्यमरः । २ विप्लवः सर्वतः ।

भिपततो भवान् योगीन्द्रदत्तदण्डेन निरुध्य गत्यन्तराभावाद् दण्डीममुपायुङ्क्त । तस्य दण्डस्य प्रहारेण धरणिः कम्पितुमारब्धा । क्षणादेवामी चत्वारो नराधमा धरणिधूलिमलिक्षन् ।

क्रोधावेशेन चन्द्रस्य नेत्रे शोणितशोणशोभां बिभराम्बभूवतुः । साम्प्रतमसौ– 'जीवति न वेति कोऽपि भटः ?' इति निश्चेतुमवलोकितवानभितः । कमप्यनवलोक्य तत्र जीवन्तमयं निगृहीताया महिलाया अभ्यर्णं जगाम । विमुच्य बन्धनाद्विभयाञ्च विधाय तामपृच्छच्चन्द्रः 'सुन्दरि ! क्वासि त्वम् ? क इमे बभूवुर्नृशंसाः ? कुत्र त्वामनयन्नमी ?' इत्यखिलं निवेदय मे । न कोऽपि नाकस्त्वां पीडयितुं मम रक्षायाम् । प्राणान्तेऽपि त्वां रक्षिष्यामि, मा भैषीः स्वकुलप्रदीपे ! धर्मभगिन्यसि मे । यदेव सद्वृत्तं, ते त्वाविवेदय मे, तदखिलमिति ?।

चन्द्रस्य शान्तिप्रदं वचनमुपश्रुत्य विमला मनागालम्ब्य शान्तिमब्रवीदेनम्– 'भ्रातः ! अस्मि निराश्रितैका अबलाऽहम् । महादुःखाकुलास्म्यहम् ! इयदवधि किञ्चिदभवमहं सुखिनी । परमिदानीमतिदुःखाम्बुधिनिमग्नमानसाऽस्मि ।' इति ।

चन्द्रः । भगिनि ! अपि कथयिष्यसि कीदृग् दुःखमस्ति तव ? यथासंभवमहं दुःखमदः समूलमुन्मूलयिष्यामि । भगिनि ! किन्ते नाम ? ।

विमला । विमलेति ख्यातेयं हतभागिनी । परा व्यथा खलु आपत्ता मदुपरि घोरात्याचारविरचनायाम् । भ्रातः ! होराचतुष्टयमेव केवलमस्य जगतोऽतिथिरहम् । [इति निगद्य रोदितुमुपक्रान्तवती विमला ।]

चन्द्रः । ( समाश्वासयन् । ) भगिनि ! किमिदं ब्रवीषि ? होराचतुष्टयमेवातिथिरसि त्वमिति कोऽभिप्रायोऽस्य ? भगिनि ! समाश्वसिहि । मा स्म रोदीः । न भयमिदानीम् । वीरवरस्य चन्द्रसिंहस्य रक्षायां कालादपि किमपि भयं नास्त्येव भवत्याः ।

चन्द्रसिंहनामश्रवणेनैव चमत्कृत्योपरि निरीक्षितं विमलया । प्रमुदितान्तःकरणया चानयाऽकस्मात्– 'किम् ! साक्षाच्चन्द्रसिंहः, किमु श्रीमान् ? किं भवानेव वयस्याया मम कुमुदिन्याः प्राणवल्लभश्चन्द्रोऽस्ति ?' इति व्याहृत्य चन्द्रमुखमालोकि निपुणम् ।

आम् ! स एवायं मन्दभागधेयश्चन्द्रः । भगिनि ! दृष्टा त्वया प्राणप्रिया मे कुमुदिनीति मन्येमि खलु ? सुभद्रे ? अवगच्छसि चेन्निवेदय– कुत्रास्ति मम कुमुदिनीति ? तामन्वेष्टुकाम्यैवाहमतुलं संकटं विषह्यात्र समायातोऽस्मि । कथय कथय सुशीले ! क्वास्ति मे कुमुदिनी ?' इत्यधीरतयाऽपृच्छच्चन्द्रः ।

विमला । हा हन्त ! भ्रातश्चन्द्रसिंह ! विलम्बितं मनाग् भवता । येन ममैव दुर्दैवाद्यापि स एव नृशंसो मत्सखीं कुमुदिनीं मदन्तिकात् प्रसह्य नीतवान् । तां मोचयितुं प्रवृत्ताया ममोपरि नराधमेनामुना महानत्याचारो व्यरचि । दुरात्मनाऽमुना प्रियवयस्यायाः कुमुदिन्याः शरीरं देव्यै उपहारीकर्तुं निश्चितम् । यस्याः पूर्वमहं व्याघ्रदन्तीयेति नृशंसा इमे भटास्त्वद्दोषाः प्रगृह्य मामुपहारीकर्तुं नयन्ति स्म ।

चन्द्रः । किमत्रासीन्मत्प्रियतमा किञ्चित्कालपूर्वम् ? हा दैव ? स्वमत्र एव तिष्ठन्ति मम कियन्ति पदानि सदैव ! ! भगिनि ? नृशंसोऽयं क्रूरसिंहः किं किमस्याचरितमकरोत् कुमुदिन्या उपरीति कथय माम् ।

अथ प्रागागमनो निखिलं वृत्तं निवेद्य–कथमाहृता कुमुदिनी क्रूरेण ? कथङ्कारञ्चासौ कुमुदिनीमभ्यर्थितवान्; तया चावमानितः कथमन्ते तामथ बलिं दातुं नीतवानित्यखिलं सुवृत्तमश्रावयच्चन्द्रं विमला ।

सविधेङ्गितमखिलं वृत्तमाकर्ण्याथ पृष्टवानिमां चन्द्रः 'विमले ? कुमुदिनीमसौ नृशंसः केन पथा कस्मिँश्च स्थले नीतवान् ? ' इति ।

विमला । महाशयमद्यावेत्तमभ्यान तदा तु कयाऽपि युक्त्या सा रक्षितुं न नृशंसमहमन्वगामिष्यम् !! ।

चन्द्रः । ( स्वगतम् । ) किं नोपलप्स्यते तदाय पन्था ? किं पुनरेकवार मयोक्तव्योऽयं दण्डः ? ( इति चिन्तां रूपयति । )

चिन्ताविताने कतानमानसमेनमवलोक्य निजगाद विमला–' भ्रातः ? किमिदानीं विधेयम् ? सनातोऽयं निशीथसमयः । प्रभातप्रायायां शर्वर्यां तु सत्यां ■ कुमुदिन्या बलिदानविधिः समाप्स्यते । हन्त । किमधुनाऽहं नैव सञ्चेष्टेय तया ? ' इति निगद्य प्रारुदद् विमला ।

चन्द्रः । भगिनि ? धैर्यमाधेहि हृदि । साधुनाऽधिककालमलमथ तु रास्मास्थातुमवनितले । ( निःश्वस्य ) अतिमात्रमहमिदानीं किंकर्तव्यतामूढोऽस्मि । अपि सुरक्षमन्तर्हितो भवतु दण्डोऽयम् ? परमुपयोक्तव्य एवाय मया ।

इति विचिन्त्यासौ क्रुधा हस्तमुद्यम्य दण्डमिमं निपातितवान् बलेन भूतले । दण्डाघातेन सम सकम्पमपि दुर्गं प्रचकम्पे । सर्वतो दुर्गाभ्यन्तरे समश्रूयत प्रतिध्वनिरस्य । तत्क्षणमेव महता निर्घोषेण साकं भ्रमभ्रमाय तन्महासदनं भङ्क्त्वाऽधो निपातितम् । चन्द्रो विमला चोभौ यत्राऽऽसीनौ सा भूमिरपि प्रकम्पितुमारेभे । पश्यतोरेव तयोस्तत्स्थाने सञ्जातं गभीरमेकं महानिम्नम् । बिलमिदमवलोकयान्त पश्यता विवरेऽस्मिन्नवनतुमेका सोपानपङ्क्तिरालोकिता चन्द्रेण । अथ विचिन्तितवानयम्–' सुरङ्गया आभ्यमनया । गुप्तद्वारमप्येतस्या आस्मिन्नेव स्थले स्यात् । अमुनैव वर्त्मना नीता भवेदेतेन दुरात्मना मम कुमुदिनी ■ ' इति ।

सुरङ्गालोकनसमकालमेव योगीन्द्रप्रदत्तो दण्डोऽन्तर्दधे चन्द्रसकाशात् । एकमपि प्रहरणं नावशिष्टं चन्द्रसन्निधौ । कुमुदिनीरक्षणनिमग्नमनस्कतयैव किमप्यपरं शस्त्रमादातुं विस्मृतवानसौ । सहसैवोन्मत्तीभूयाय सुरङ्गां प्रवेष्टुं सोपानपरम्परयाऽवतर्तुमारभत । तमनु विमलाऽपि नीचैरवतरीतुमुपचक्रमे । क्रूरसिंहहननार्थं निजवसनान्तरेका तीक्ष्णतराच्छुरिका तिरोहिताऽभूद् विमलया । उभावपि सोपानपङ्क्तिमुत्तीर्याधस्तलमासाद्य सुरङ्गायां चलितुमारेभाते । सुरङ्गाभ्यन्तरे सन्भूदन्धतमसमतिगहनमिति कोऽपि कथमपि मुखं वीक्षितुमक्षम एवाभवत् । तमपि विपुलप्रमो गच्छतोरनयोः सुरङ्गायां भिन्नदिग्गामिनौ द्वौ पन्थानौ समुपस्थितौ ।

किन्तु न विदितमाम्यां "द्विमुखोऽयं पन्था" इति ।

अन्धतमसमध्यादेकेन पथा चन्द्रसिंहोऽपरेण चाध्वना विमला जगाम । विमलाऽऽगमान-मनुगच्छतीति चन्द्रोऽनागच्छत् । चन्द्रसिंहः स्वामनो यातीति विमलाऽऽगमत् । परं संतमसे नालोकितुमेतौ प्राभवतां परस्परम् । अन्ततस्तौ मिथो विच्छिद्य पृथक्पृथग्वर्त्मना जग्मतुः । अहो विलक्षणैव तवेदृशी विद्यते प्रभो ? लीला ॥ ।

⁂ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ रुक्मिणीहरण-नाटकानुगे कुमुदिनीचन्द्रे त्रयोदशी कला ⁂

---

# अथ चतुर्दशी कला ।

---

" अन्यान्ततो निशातं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकपाते समरमुखे नृत्यति कबन्धः ॥ " (पद्यकादम्बके)
" गर्ज गर्ज क्षणं मूढ । " (चण्डी)
" स्वार्थाभ्यर्णा गुणाः प्रणयिक्रियैव ॥ " (विक्रमोर्वशीये ।)

* गाढान्धकारायां सुरङ्गायां यत्र विमलाचन्द्रौ मिथो वियुज्य भिन्नमार्गमाश्रयतां तदाऽऽ-सीदर्धरात्रकाला रात्रिः । तत्र पूर्वं गुप्तगृहाभ्यन्तरे कोऽप्यन्य एवाजायत कार्यव्यापारः । निर्णीयसमयात्पूर्वमेवानीय गुप्तगृहे कस्याञ्चित् कन्दरशालायां निरुद्धाऽभवन्निगडितहस्ता कुमुदिनी । तस्याः समन्ततो द्वादश नग्नकृपाणपाणयः प्रहरिणः सततं विदधिरे । इतरे पञ्चदश धीरा व्यापृता बभूवुः स्वस्वकर्मणि । तदतिरिक्ता अपरेऽपि किङ्कराः साधारणकर्मणि नियुक्ता अभवन् । तेष्वेको वह्निदानकृतेऽग्निकुण्डं पर्यमार्द्, इतरोऽङ्गारैराढ्यां महतीमेकां "भस्त्रां तदभ्यन्तरे लोहशलाकादण्डानुत्तापयति स्म, अन्यो देवीप्रतिमां बाह्यतो विमला-मकार्षीत्; परश्च सर्वेषामासनान्यासनानि मेवमास । योऽसौ पूजार्थविधानं कुरुते स्म, नामी-श्वरो देवीपूजक । कश्चिद् विप्र इत्यपमदेयत । तदनुरोऽसौ यजुषा समनर्तत । इत्थमाश्रिता जनाः संलग्ना अभूवन् पृथक्पृथक्कर्मणि सावधानम् ।

कार्यादियं तन्निग्रो याथजमामीयकृष्णपक्षचतुर्दश्या । सर्वत्रापि गुप्तगृहे नास्तिरात्रिरामी-रागमनि । इयन्मात्रपरिच्छदपि गुप्तगृहमिदं मीरवमासीद्विशालम् । केवलं निशीथकालमयः

---

१ " वदन्त्यको निशानुगमनमुद्दिष्टमेतम् ।" इत्यन्यः । २ ' अङ्गारपरिपाटीराग्रपि दहन्दपि' इत्यपर । ३ सवर्णा पूजा । ४ निश ।

सूक्ष्मझिल्लीरव समाकर्ण्यतास्मिन् । देवीमूर्तिनिकटे महानेको घृतदीपः प्रदीपितोऽभूत् । एवं कर्मलीनेष्वेवाखिलेषु समुपावर्तत विभावकाल । समयेऽस्मिन् रथेन सममितरान् दशपुरुषानादाय तत्रोपतस्थे क्रूरसिंहः । तदानीमेव नृणां द्वौ मानवौ महाभयानकरूपौ समदृश्येताम् । कृष्णनिचोलेनाच्छादित सकलमात्मशरीरमाभ्यामित्यनयोः कृष्णवदनमतिवि- करालमालोक्यत सम्प्रति ।

क्रूरसिंहस्तत्रोपगम्य तत्क्षणमेव निजानानुचरान्– ‘ अपि सुसज्जितमखिलम् ? ’ इत्य प्राक्षीत् । ‘ आम् । सुसज्ज सकलम् । ’ इति तदाभिमुखवर्तिना जनेनावोधि । अतीवक्रूर- रूप समालोक्यत साम्प्रतमथ क्रूरसिंह । आसीच्चममस्य शीर्षम् । अतिरक्ते अभूतामसुष्य नेत्रे । बलिदानस्य सकल सम्भारमालोक्यासौ भृशमानन्द ।

अथादिष्टवानयं दुष्टो भटौ स्वनिकटमानेतु कुमुदिनीम् । कुण्डे कृपीटयोनिरपि प्रज्वा- लवतरामधुना । अङ्गारधानिकायामुत्तप्ता आयसशलाकादण्डा अपि शोणशोणा समजायन्त । अत्रान्तरे कुमुदिनीमादाय तत्रोपस्थितौ भटौ । शान्ताकृतिरदृश्यत सम्प्रति कुमुदिनी । नेयमबिभेन्मृत्यो । केवलं निलीनमस्या मनो निजहृदयदयिते चन्द्रे । इत्थं शान्त्या वस्तुधीमिमां विलोक्य तदभिमुखीभूय समभाषत क्रूर – ‘ कुमुदिनि ? उद्यता भवेदानीं मरणाय । पश्य, कुण्डे देदीप्यमानो बृहद्भानुरयं त्वां परिरब्धुमातुर प्रतीयते । पश्य पश्य । इमा दहनतप्ता अरुणारुणा आयसशलाकास्तवाङ्गमालिङ्गितुं कियदाकुलीभवन्ति । पृच्छामि त्वामन्तिमकाल एवाहमिदानीम्– ’ परिवर्तितो न वा निजविचारस्त्वयेति ? ’ ।

‘ आतताथिहतक ? किमिति मुहुर्मुहु पृच्छसि माम् ? भृशमातुराहं सञ्जातास्मि मृत्युना मान सङ्गमयितुम् ? ’ इति दृढतयोक्तं कुमुदिन्या ।

अस्या ईदृशमुत्तरमाकर्ण्यातिकुपितो जातः क्रूरसिंहः । आदिष्टवाँश्चायं कुमुदिनीं बन्धना- न्मोचयितुं भटानिति तैर्मोचितेयं बन्धनात् । अथ एककाभिमुखीभूय बभाषे क्रूर ’ महा- राज ? कार्यतामनया इदानीं यथाविधि विधेयो विधिर्भवतेति ? ’ ।

क्रूरसिंहानिदेशमुपलभ्य पूजक पूजासामग्रीरादाय कुमुदिनीसमीपमागतवान् । एव कुमुदिनीललाटमानर्च कुङ्कुमेन । कण्ठे चास्या रक्तकर्णिकारपुष्पमाल्यमासञ्जयामास । अथानया देवीमूर्तिपूजां कारयाञ्चकार । अथामिते पूजाविधौ कुमुदिनीमकथयदसौ– ’ वनिते ? परमेश्वराभ्यर्थनं विधेयञ्चेद् विधेहि सम्प्रति । परतो देवीबलिदानं ते करिष्यामो वयमिति ? ।

पूजारिवचनमित्याकर्ण्य परमात्मानमियं प्रार्थितवती– ” हे सकलजगन्नियन्त सर्वान्तर्या- मिन् परमात्मन् ? सर्वज्ञो व्यापकोऽसीति जानासि हृदयं सर्वेषाम् । अयि दीनबन्धो दयासिन्धो शरणं प्रपन्नास्मि तवाहमिदानीम् । शरणागतपालक देवाधिदेव ? पाहि पाहि निराश्रितामिमां निःसहायिकाम् ” इति । अथ चन्द्रं स्मृत्वा विलपन्तीयं जगाद–‘ प्रियचन्द्र ? प्राणेश

1 निःशब्दतरः । 2 अग्नि । 3 अतीवरक्ताः । 4 आलिङ्गितुम् ।

भवदीया चिरन्तनसमयार्थमिदानीं वियुक्ता भवति भवन । प्राणेश्वर ! प्रणमति श्रीमच्चरणारविन्दभ्रमरीव श्रीमन्तम् । सुखिनं करोतु भवन्तं भगवानखिलेश्वरः । ' इति निगद्य शान्तमनसा निजहृदयेशे हृदयं स्थिरीकृत्य कुमुदिनी परमेशस्मरणं कर्तुमारेभे ।

इत्थं ध्यानमग्नामालोक्य तामपृच्छच्चुनारि ' महिले ! अवसितं न वा तवाभ्यर्थनमिति ?' सा च-' आम्, उद्यतास्मि सम्प्रति मरणायाहम् । ' इति समुदवारीत् । तत्क्षणमेव शूरसिंहो दूरस्थितौ नीलनिचोलधारिणौ दासौ सङ्केतेन स्वसमीपमाहूयाज्ञप्तवान् धर्तुं तामिमाम् । शूरनिदेशसमकालमेवाभ्यां बलिदातृभ्यां भृत्याभ्यां सत्वरमेवागारादानीयमानात् शालाकाद्वन्द्वात् हस्तेऽसिकाया धृतेऽसि सार्धं तान् निजहस्ते धृत्वा कुमुदिनीनिकटमेत्याबोधि-' वनिते ! अपि निवेदनीयं किमपि ते ? ' इति ।

" नैव । " इत्यालपाय चक्षुषी निमील्य परमेश्वरस्मरणमिव कर्तुमारेभे । अस्या उभय पार्श्वस्थ बलिदातारौ तौ तच्छालाकाधरौ स्वकरौ उत्थापितवन्तौ । ततः क्रूरस्वरमाकुश्य समभापत-' कुमुदिनि ! हतभागिनि कुमुदिनि ! अधुना विमुच्यसे स्वजित सखे ! ( बलिदातारौ प्रति । ) धीरौ ! निःक्षत्रमिदानीमिमे शलाके अस्या उरस्स्यते । ' इति ।

तत्कालमेव यावदेतौ पुरुषौ स्वकरस्थे शलाके तस्या वक्षोऽभ्यर्णं नयनस्तावदेव तदीयपश्चाद्भागमुपेयिवानेक -' तिष्ठत रे पापिष्ठाः ! तिष्ठत । अतिविलम्बोऽधुना मम कुमुदिनीमरणे । या निहन्तुर्निशाचरस्य क्रोष्णरुधिरं पातुमयं वीरकेसरी समुपस्थितः । ' इति भयङ्कर कण्ठीरवसोदरो ध्वनिः । इत्थं सिंहनादं कुर्वाणस्तदानीमेव सम्प्राप्तस्तत्र चन्द्रसिंहः । तदागमो कराभ्यां जायमाने लोहशलाके भयेनाकस्मादवनितले निपेततुः । उभावपि चकितौ-' किमिदमकस्मादापतितम् ? ' इति विमृशन्तौ काष्ठपुत्तलिकाविव स्तब्धावभूताम् । अनन्तरं दूरस्थातु । दुरात्मा क्रूरसिंहस्तु पापागारस्तब्धो बभूव । नायापि निःशाव निष्कलङ्कया कुमुदिन्या ' स्वरक्षणार्थमुपस्थितोऽयं नाम महाशयो वस्तुतः कः ' इति । अत्रान्तरे तु धावमान एव नेदीयान् भूत्वा चन्द्रः । नेदिष्ठमिममागतं सद्य एवाभिज्ञाय क्रूरोऽवदत्-' कस्त्वम् ?' चन्द्र किमु ? स्वनपि योग्यकालमेव सम्प्राप्तवानसीति मुख्यमाल्यमय मे । तथापि पन्थानमवेक्ष्य ममैव देवी सातुरम् । [ भटान् प्रति ] निगृह्णीतमेव निवार्योऽपि ! ' इति ।

निमर्दीतुमानननिपुणता मनसैवालोक्य सहसा सिंहनादं विधाय चन्द्रः क्रूरसिंहं निहन्तुमना सद्यस्तानेव निबद्धदृढमुष्टिकं समभ्यद्रवत् । चन्द्रस्यानिद्ध रूपं निरूप्य भयाकुलमना निरस्तगाधर्मामुद्धार सैनिकान् क्रूरः । तदीयहस्तासिरानीतान् भूतले तथापि । भृगपुर्मृगान्यामिव चन्द्रः क्रूरमभ्यग्रहीत् । चन्द्रनिग्रहणागता भटास्तु-' अविताङ्केनोपयाभिनालाद विभाव्य निमुद्रा बभूवुः । चन्द्रस्य शोणितशोणे नयने, प्रचण्डरूपञ्चापि निरूप्य निजसेनापतिसहायतार्थं गन्तुं न पारितौ तौ साहसमप्यन्विषुन् । चन्द्रसिंहक्रूरसिंहौ मिथोऽतिविषादं युयुधाते । अथान्तरे कोलाहलमाकर्ण्याविकरेणानुनादः मन कुमुदिन्या इति सेवं समुन्मील्य लोचने

१ ' अण्ठी ' इति प्रसिद्धा भरतनिवनमरदनम् । २ अन्तर्धनम् ।

*

यावदवलोकयति तावदेव स्वजीवनाधारं मसारसारं शत्रुणा युध्यमानं निजमनोनन्दनं हृदयेश्वरमद्राक्षीत् । नियुद्धे श्रान्तोऽतितरामन्ते क्रूरसिंह इति प्राप्तावसरश्चन्द्रस्तमुत्तोल्य भुवि न्यपातयत् । परमसौ दुरात्मा सहसोत्थाय चन्द्रं प्रहर्तुमारेभे । किन्तु निष्फलमन्ततो जातं तदीयं बलम् । चन्द्रोऽवसरमुपलभ्य बलेन मुष्ट्या प्राहार्षीत् क्रूरमस्तके इति मूर्च्छितो भूत्वाऽसौ महीतलमलङ्कृतवान् ।

अधोनिपतितमेनं चरणैरतीनदच्चन्द्रः । शस्त्रं किमपि लभ्येत यदि मस्तकमस्य तर्हि कलेवरात् पृथक्कुर्यामिति मनीषया विष्वगालोकयामास चन्द्रसिंहः । परं नागतं किमपि शस्त्रं तस्यैव पथम् । क्रूरसिंहकराद् विगलितं करवालं कालकुशलस्तया प्रागेव न्यगृहीत तदीयभृत्यः । अनुपलब्धशस्त्रतया चन्द्रोऽयमतिक्रुधा स्वशिरसा तदुरस्स्थलमवमर्दयामास । अथास्य कण्ठं नखैर्विदारयितुमसौ विचिन्तितवान् । किन्तु तत्क्षणमेवोदियाय मनसि तदीये विवेकः ' नहि । नहीदृशे हन्तव्योऽयम् । गले नखं दत्त्वा हननं दुर्बलजनविलसितं खलु । शस्त्रेणैव हनिष्याम्येनम् । परं निरस्त्रोऽस्मि । एकमपि शस्त्रं न विद्यते सम्प्रति मदन्तिके । ' इति ।

स्वस्वामिनं विचाराकुलं विभाव्य तदुपकण्ठमुपेत्य जगाद कुमुदिनी " प्राणेश्वर ! क्षम्यताम् ममाधुना, मनागाकलयतु धैर्यं भवान् । यतः कलङ्कमिव तनुते मूर्च्छितजननिबर्हणं क्षत्रियपुत्रस्य । प्रबुद्धमेनं सद्य एव व्यापादयतु भवान् " इत्यभिधाय तत्रैव स्थितवती ।

चन्द्रो मुहुर्मुहुरवलोकयामास विचेतनं क्रूरसिंहम् । यथा यथा विलोकयति स्मायं क्रूरसिंहाननं तथा तथाधिकमस्य दिदीपे रोषानलः । यथा दुःशासनवक्षस्स्थलमधिरूढो रुद्ररूपधारी भीमसेनः स्वशिरस्तदुरसि निपातयति स्म तथैवायं चन्द्रोऽपि क्रूरवक्षसि प्रहरति स्म मूर्ध्ना । प्रबलेन शिरःप्रहारेण प्रावर्तत रुधिरधारा नृशंसस्य तुण्डात् ।

स्वसेनापतेरतीवदुर्दशां निरीक्ष्य समीक्ष्य चास्य वदनाद्विनिःसरन्तीं रक्तधाराम्—' हन्त ! किमुपरतोऽयमस्मदीयसेनापतिः ? मा भैरम् । नेदं सहिष्यते ॥ आगच्छन्तु सर्वे वयं संभूयैनं हन्मः ! ' इति व्याहृत्य क्रूरसिंहसैनिकाश्चन्द्रग्रहणाय युगपत् सिंहनादं वितन्वाना एनमभ्यपतन् । क्षणादेव क्रूरपक्षस्य ग्माधिरूढो निःशस्त्रश्चन्द्रोऽभूत् प्रसह्य भग्नपृष्ठे । तेषां करपञ्जरादात्मानं मोचयितुमनिशं प्रायतत चन्द्रः परं निष्फलमभूदखिलं यत्नजातम् ।

सैनिकैरमी धृत्वान्तरितः पिपासाकुलो निष्प्रहरणश्चन्द्रो निगृह्य नियन्त्रितकरचरणो व्यधायि । दासीभिर्नियन्त्रितं चन्द्रमालोक्य रुरोद कुमुदिनी । रुदतीमिमां सुदतीमालोक्य जगाद चन्द्रः ' कुमुदिनि ! किमिति रुद्यते त्वया ? अलमेव मात्म्यमनिरात् । दैवमेव विजयते मानवमन्ये । मदर्थे हि धैर्यं धारय । त्वदीयमश्रुजालं विलोक्य व्यथते मम हृदयम् । ततस्त्वमप्याश्वस्ता भूत्वा विलोकय प्रभुलीलाम् । त्वां रुदतीमालोक्य प्रसीदन्ति रिपुदला इमे ।'

---

१ बाहुयुद्धे । २ प्रिया । ३ मुखात् । ' [illegible] ' इत्यमरः । ४ हस्तनिबद्धम् ।

इति । इत्यमुपदिश्य यावदाश्वासयति कुमुदिनीं चन्द्रस्तावदेव सैनिकैः स्वसेनानीशिरसि शीतलं जलं निषिच्याथ क्रूरो विहितः सचेतनः । एष संज्ञामुपलभ्य यावदालोकयति तावदथ चन्द्रं निगडितमालुलोके । ततो न ममौ क्रूरस्य हर्षो हृदि । हर्षकिलकिलारवं विधायाचचक्षे क्रूरो निजसैनिकान्– 'धन्याः स्थ मदीयवीराः ! निगृहीतोऽयमन्ते शत्रुर्भवद्भिः खलु ॥ धन्याः मदीयविश्वासभाजनानुचराः ! नास्ति चिन्ता खलु किञ्चिदप्यधुना । पातितो जाले मृगेन्द्र इति तमपि सम्प्रति देव्यै बलिं वितरिष्यामो वयम् ।' इति ।

इत्युक्त्वा पुनरपि लोहशलाकादण्डानुत्थापयितुमादिशदनुचरमेकं क्रूरः । उत्थापितेषु च तेषु शलाकादण्डेषु बलिदातारौ तान्त्रिकहस्ते गृहीत्वा चन्द्रनिकटमागमताम् । यथैवेमौ शलाकादण्डानिमान् सशक्तिबन्धवक्षसि निखातुं प्रवृत्तौ तथैवाथ चन्द्रोऽकस्मात् घोरं सगर्जं तयोरन्यतरं चरणेन प्रहृत्य दूरं चिक्षेप । पदाघातेनाथ बलिदाता देदीप्यमानानले कृशानु कुण्डे निपत्य भयङ्करैर्ज्वालाजालैः प्रज्वलितोऽभवत् । चन्द्रस्येदृशं विक्रममद्भुतं विलोक्यापरो बलिदाता तु भिया प्रकम्पितुमारब्ध । 'किमिदं जातमकस्मात् ?' इति क्षणममौ व्यचिन्तयत् । अधुना तु यावदसौ विचिन्तयत्येव तावदेव चन्द्रसिंहस्तन्निकटमुपगत्य तमपि रंहसा चरणेनाग्निकुण्डे प्राक्षिपत् । पश्यतामेव विधेयानामिमौ बलिदातारौ देवाबलिनेवाग्निकुण्डे निपत्य दग्धौ च भस्मीभूतौ । बलिदात्रोरित्थं विनाशं निरीक्ष्य सैनिकानपरानमौ क्रूरो बहुविधं गालिदानपुरस्सरमाचुक्रोश । आदिदेश चायममून् दृढतरं निगडयितुं चन्द्रकरचरणम् । सकलैः सैनिकैः सम्भूय सन्दानितो दृढतरं ज्याऽसौ चन्द्रः ।

अथ दुरात्मा क्रूरसिंहः खड्गमादाय चन्द्रनिकटमाययौ । 'सन्निहितमधुना स्वमरणम् । स्वरक्षणाशा च निष्फला साम्प्रतमिति' मत्वा सुतरां निराशोऽजनि चन्द्रः । परित्राणकरणा निष्कटङ्का च कुमुदिनी साक्रन्दनं रोदितुं प्रक्रान्ता । मतिविकल्पन्तीमवलोक्यैतामाश्वासयितुकामोऽब्रवीच्चन्द्रः – 'प्रिये कुमुदिनि ! किमिदमुपक्रान्तं त्वया ? काऽसि त्वमिति विस्मृतं ननु ! नैव शोभते रोदनमीदृशं वीरपुत्र्यास्तव । किमिति मृत्योर्बिभेषि त्वम् !' इति ।

कुमुदिनी । ( बाष्पं विसृजन्ती । ) प्राणेश्वर ! नाहं बिभेमि मरणात् । न चाहमत्र रोदिमि । उद्यतैवास्म्यहं मरणाय । किन्तु श्रीमानस्या दास्याः कृते विकराळकालकवलतामुपैतीति समधिकमहं दूये । अहह ! अतिभद्रमभविष्यद्यद्यागमिष्यच्चेदिहाग्रसमयात् ॥

चन्द्रस्तु– 'प्रिये ! मा भैषीः । परिहाय त्वमिदानीं संसारमोहमायाजालमखिलेश्वरं सच्चिदानन्दकन्दं परमात्मानं चिन्तय ।' इति तामुपदिश्य क्रूराभिमुखीभूय जगाद– 'रे नराधम ! किं विमृशसि ? चालयाधुना निजचन्द्रहासम् ।' इति । 'भद्रम् ! सन्नद्धो भव तर्हि !' इति प्रोच्य क्रूरो देवीमूर्तिसम्मुखमागत्य व्याहृतवान्– 'अयि जगज्जननि ! महामायस्वरूपिणि ! रक्तपिपासु ! कदम्बकमेनं बलिं ते दास्ये किन्तु तवास्मिन्द्राविमौ बलीभूतौ जनौ । तदपि दयालुमातः ! प्रसीद त्वमस्मद्धृदये

---

१ वधेन । २ " कलौ रुद्रो महाकाल उमा च कालिका " । इति मदिरा ।

विमला । नास्ति खलु ? भवेच्चेदिदं प्रेम तदविद्यमानमिव विद्यते । क्रूरसिंह ? नास्ति स्वर्गीयं तव प्रेम ?? कलुषरागेणैव शरीरवर्ति केवलं तव प्रेमाग्निः । क्रूरसिंह ? नाहमभिलषामि त्वया सममालपितुं किमप्यन्यत्, केवलमहं त्वाम्— 'निर्दोषाविमौ दम्पती रक्ष' इत्यभ्यर्थये । ब्रूहि क्रूरसिंह ? किमिति तूष्णीं स्थितोऽसि ? देयो यदि देव्यै बलिस्त्वया तदा तदीयस्थाने समुद्यताऽस्म्यहम् । प्रमुदा देयो मम बलिर्देव्यै । परं विमुच्येतां दम्पती । नाहं शक्नोमि तयोः कष्टमालोकितुम् । क्रूरसिंह ? दयस्वानयोः । उचितमेव स्यात्तव हृदि दयैवेति विभावयामि । ब्रूहि क्रूरसिंह ? ब्रूहि । किमिदानीं कर्तुं तयोर्निर्धार्यते त्वया ? निर्मोऽप्यसि त्वमिति मन्येऽहम् ।

क्रूरः । ( सरोषम् । ) शृणु, यदहं चिकीर्षामि । अयि विमूढे ! कुमुदिनीचन्द्रयोर्निषूदनात्र कोऽपि मां वारयितुं पारयति । तयो रुधिरपानाय चिरादहं भृशमातुरो भवामि !।

विमला । ( सशङ्कितम् । ) भोः ! किमिदमाकर्णयामि ? अयि विश्वम्भरे ! समाविशय नृशंसमिमं निजोदरे । हे चित्रभानो ! विनाशय दुरात्मानमेनं सद्यः । रे दुराचार ? दयालवोऽपि न वर्तते त्वयि । हन्त ! अपकृत्यैवोपकारं प्रत्युपकरिष्यसि किमु त्वम् ? अपि व्यापादयिष्यसि त्वमस्मत्प्राणरक्षिणः ? धिक् त्वां नराधमं नृशंसम् !!।

क्रूरः । अलमलं प्रकम्प्य, बाले ? को नु खलु सम्बन्ध इदानीमावयोः ? नृशंसोऽस्म्यहम् । किं तवामुना ? किन्तु प्रयोजनं ते कर्तुमन्तरायं मम कर्मणि ? किंतु तादृगुद्देश्यं तवात्र कृत्ये ?।

विमला । उद्देश्यम् ? निराश्रितपालनमेवाद्य सकलनृणां कर्तव्यमेव । नास्ति दयालेशोऽपि यदीयहृदये राक्षस एवासौ जगतीह ।

क्रूरः । हन्त ! विमले ! साम्प्रतमिमे तव शब्दाः कण्टका इव विदार्य मम हृदयं परपारं निर्यान्ति । तव तुच्छपुण्डरीकमण्डनेयं मृदुला रसना पाषाणखण्डवदतितरां प्रतिभाति मे कठोरा । सद्य एवैनां धारय प्रजल्पन्तीमधुना !।

विमला । क्रूरसिंह ! यथा मम शब्दाः कण्टका इव प्रतिभान्ति ते तथैव तवेदं निर्घृणं नृशंसं हृदयमपि वज्रमिव कठोरं प्रतिभाति मे ।

क्रूरः । विमले ! त्वमेका सुन्दरी ललनाऽसि खलु ! परं तवेदं वचनं कृत्यमालोचयतो, मे पिशाचिनीव कापि लक्ष्यसे ।

विमला । नराधम ! नासि खलु त्वं मानवः परं दानवोऽसि कश्चित् !!

क्रूरः । विमले ! लज्जस्व खलु मां भाषमाणा !! न कोपय मामधिकम् !! अन्यथा कुमुदिनीचन्द्राभ्यां सहैव त्वयापि मरणीयमेव ? मदसिना निकृत्तं स्यादुत्तमाङ्गं ते ।

विमला । अये किमत्र मां विभीषिकां दर्शयसि खलु ? मरणार्थमेवाहमिह समायाताऽस्मि । पापिष्ठ ! तवासिनाऽस्य स्वशिरश्छेदस्य कुतो न्वीदृशं सौभाग्यं प्राप्नुयामहम् ! क्रूरसिंह ! मर्ताऽसि परं भद्रं कृत्वैव मर्ताऽस्म्यहम् ।

---

१ पारयाम्रना । २ निषूदनं मारणम् । ३ 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ।

क्रूरः । शृणु रे दुराग्रहिले ? मोहिले ? शृणु । नाहमिच्छामि त्वां निहन्तुम् । यतो ममातितरां प्रिया त्वमभूरेकदा । विमले ! विस्मृताधुना । पतिरस्मि तवाहम् । त्वञ्चासि मम दयिता । गच्छ, इव परमहं विमलेन हृदा कामयिष्ये त्वाम् । विमले ! निजपतिवचनाङ्गीकरणं कर्तव्यमेवास्ति नारीणाम् ।

विमला । आपन्नार्तिजनेषु करुणाप्रदर्शनमपि कर्तव्यमखिलनृणां खलु ! ।

क्रूरः । ( सकोपम् । ) विमले ? इयदुपदिश्यमानापि न मानयसि मे वचनम् ? ममार्धाङ्गिनी भूत्वा त्वं मदीयशत्रुजने कारुण्यं दर्शयसि ? ।

विमला । नैव नैव । नैव कर्हिचित् । प्रागहमासं तवार्धाङ्गिनी, किन्तु नास्म्यहम्, सा सम्प्रति । त्वं दयिष्यसे चेदिमौ तदा तु साम्प्रतमपि तवैवास्म्यहम्, तवैव च भविष्यामि । तद् दयया विमोचय तौ दुःखेभ्यः ।

क्रूरः । नेदं संभवतीति ! ! दुराग्रहिले विमले ? अङ्गीकुरु मे वचनम् । न चेन्मरणीयमेव त्वयाऽपि ।

विमला । नाहमुररीकरिष्यामि तव कथनम् ।

क्रूरः । ( सामर्षम् । ) बाले ? त्वमेव मां निहन्तुमागताऽभवः किमु ? ।

विमला । आम्, आम् ? अहमेव त्वामितो जगतोऽनन्तकालाय विसर्जयितुमागताऽभवम् । रे दुरात्मन् ! अपि विज्ञातं त्वया ? ।

क्रूरः । तवैतादृशवचसा ज्वलन्तीवाङ्गानि मे । रे ! त्वमीदृशी विश्वासघातिनी भविष्यसीति पूर्वमहं व्यज्ञास्यं चेदधिककालमहं त्वां नाजीवयिष्यम् ।

विमला । अधर्मिन् ! मदीयशरीरादर्थं नूनं ज्वलेयुस्तवाङ्गानि, परन्तु तव क्रूरकर्मभिः सकलेयं वसुन्धरा प्रकम्पतेतराम् ।

क्रूरसिंहस्तु- ' क्रुधाऽन्धीभूय- ' एहि, अनुसर सुरलोकसरणिं तदा त्वम् ' । इति निगद्य विमलां स्वकरवालेन प्रहर्तुमभिद्रवति यावत्तावदेव- ' तिष्ठ, रे पापिष्ठ ! तिष्ठ । ' इति सिंहनादं प्रोच्य चन्द्रोऽग्रतोऽभिगच्छन्तं क्रूरं निरुध्य कोपारुणनेत्राभ्यां तदभिमुखमालोकितवान् ।

अथ पुनरब्रवीद् विमला-' उपतापिन्, दुरात्मन् ! यावदस्मि नरकायेति । ' अतः क्रूरं राजा निगडयितुमादिष्टवान् भटान् । तत्क्षणमेव यमदूताकाराः किङ्करा विमलो राज्ञा निरूप्य कुमुदिनीचन्द्रयोः सन्निधावस्थापयन् ।

विद्वेषां वैरशोधनार्थमेव दृष्टनष्टोऽभवत्। हा ! केवलं वैरशुद्ध्यर्थमेव चन्द्रसिंहतनयो वीराग्रगण्यो राजन्यधुरन्धरो राजेन्द्रो बलिन्वेनाग्निकुण्डे होतुमात्मानं स्थितोऽस्ति। सम्प्रति क्रूरसिंहवैरानलहव्यद्रव्यभूतोऽजितदुर्गाधीश्वरयुवराजनन्दनो विजयनगराधिपतिरयं चन्द्रो बन्दीकृतस्तिष्ठति। यद्यपि तदीयशिरसि महाभयङ्करीदृशी विपत्तिगिरिमाला समापतिता तदपि तदीयं मुखमण्डलमतीव शान्तमदृश्यत। वीरधुरन्धरोऽयं राजकुमारः क्रूरस्य क्रूरसिंहस्यैतावतीं नीचतां निरीक्ष्यात्मानञ्च बन्दीकृतमवलोक्य निःश्वसिति स्म।

इत्थं गुप्तगृहे तदानीमलक्ष्यत शान्तिरभितः। चित्रलिखिता इवाखिला मवलस्थिरे सैनिकाः। एकोऽपि शब्दो न निरगमत्तेषां मुखेभ्यः।

अथ शान्तिभङ्गं विधाय क्रुधेवागादीत् क्रूरसिंहम्– 'चन्द्र ! नापि परिक्षीणं न वा तव बलमिदानीम् ? चिरकालादहं तव मरणदर्शनाभिलाषी। पूर्णोऽद्य भवितायमभिलाषो मे ! अहो ! रज्जुबन्धोऽयं कियतीमभिवेदनां पुष्णाति ते सम्प्रति ?' इति निगद्य हसितवानयं नृशंसः। हसन्तमेनमालोक्य रुषाऽवदच्चन्द्रः 'नपुंसक ! किं हससि खलु ! पञ्जरानिरुद्धं पञ्चाननं विलोक्य शृगाला यदि हृष्येयुस्ततः किम् ? किन्तु क्षत्रियोऽसि चेदधमैकवारं मां विमुच्य पश्य ततः कीदृशी त्वद्गतिर्भवतीति ?'।

क्रूरः। पाणिपञ्जरपतितं त्यजेयश्चेन्मृगमध्यं को नु खलु तदा भवेन्मादृशो मूर्खः ?।

चन्द्रः। मा, एवं किमु ? तदा त्वमतिचतुरोऽसि ननु। मूढ ! यथा गजेन्द्रपृष्ठमधिरूढो चौपसो मनसि– 'अहो ! कीदृग् मार्यं मे ? गजेन्द्रमारूढोऽस्मि।' इति हृष्यति तथैव रे षण्ढ ! त्वमपि मिथ्यागर्वमुद्वहसि।

क्रूरः। भ्रमति तव शिरसि मृत्युरिति मनागप्यनम्रीभवितुं नेच्छति किमु ते मनः ?।

चन्द्रः। किमहं तव पुरतो नम्रीभवामि ? नपुंसकस्याग्रे नम्रीभवेयं किमु ? नैव संभाव्यते खलु ! ! परिभ्रमति शिरसि मृत्युस्ततः किम् ?।

क्रूरः। किं न बिभेषि त्वं मृत्योः ?।

चन्द्रः। वीरपुरुषा मनिशं मृत्युना सहैव क्रीडन्ति।

क्रूरः। तन्नाधुना विलम्बस्तव मरणे। गण्यन्त इदानीं तव मरणकालकला। ! चन्द्र ! त्वया निजपत्न्यै किमपि निवेद्यमुतैषमाकिङ्क्षीया चेद्देनामालिङ्ग त्वरम्।

न ददौ किञ्चिदपि ध्यानं तदीयकथने चन्द्रः। सान्तरं ध्रुवमात्ममरणमिति विचिन्त्य कुमुदिनीं जगाद चन्द्रः– 'प्रिये ! मा विजहिहि धैर्यम्। यदा यदेव कष्टं वितरति नः परमेश्वरस्तन्मर्षणं प्रतिजनकर्तव्यमेवास्ति। कुमुदिनि ! विमुक्तो भवाम्यहमिदानीमतः संघर्षैः। परलोके स्थास्यामि त्वां प्रतीक्षमाणः; सत्वरमेष्यसि त्वं तत्र। [ आकाशाभिमुखमालोक्य ] प्रभो ! एषोऽहमस्मि प्रपन्नस्तव शरणम्। प्रियतमे ! त्वमपि सत्वरमागच्छ।' इति।

अथैव विमलामभाषत– " मदीयदुःखदु खिनि भगिनि ! व्रजाम्यहम् । हन्त ? त्वमपि पतिताऽसत्कृत एव विपत्पयोधौ । हा हन्त ? ! किं करोमि ! निगडितोऽस्मि, नि रुद्धोऽस्मि । नाचेदमु नृशसं खण्डशो व्यधास्यमहमिति " । अत्रान्तरे मध्य एव व्याजहार क्रूरसिंहः ' किम् ! कियान् विलम्बो विद्यते ? " इति ।

चन्द्र । बद्धोऽस्मि ।

क्रूरः । किमपि निवेदनीयं ते ?।

चन्द्र । पापिष्ठ ! किमहं त्वां निवेदयेयम् ? त्वं कोऽपि राक्षसाधमोऽसीत्येव केवलं कथयामि त्वाम् ।

क्रूर । तूष्णीमेधि रे अभिमानिन् ! यदहं ते शासनं करोमि तदयुक्तमेवास्ति त्वनिर्धारितशासनापेक्षया ।

चन्द्र' । नराधम ! व्यर्थमेवाधिकमालपनम् । नार्हसि खलु मया समं संभाषितुमपि त्वम् । नूनं क्लीबोऽसि । दुष्टहतक ! हंस्यसि बन्दीकृत्य माम् ? चण्डाल ? सम्मुखप्रहारो हि वीरपुरुषा गण्यन्ते । वञ्चयित्वा पृष्ठतो योद्धारो ननु नपुंसका भीरवराश्चाकल्प्यन्ते ।

क्रूर । ( विहस्य । ) मूढ ? मरणाद् बिभेषीति मन्येऽहं खलु ! ? अत एव त्वमियद्-दु खितो भवन् विभाष्यसे ।

चन्द्रः । भवलाद्भवादृशो भीरवो जनाश्चैव बिभ्यति मरणात् । किमिदं मरणमिति जानीषे ननु ? देहान्तरगममेवात्मनो निजकर्मानुगुणं मरणमुच्यते ।

क्रूरः । तव किञ्चिदपि न विषीदामि निजमृत्युना किमु ?।

चन्द्रः । नैव विषीदामि । परं युधि कस्यापि वीरवरस्य हस्तेन मरणापेक्षया त्वादृशस्य नपुंसकस्य हस्तेन मृत्युर्जायते मे, तथापि मदीयकुमुदिनीमरणात्पूर्वमेवायं मृत्युर्भवतीत्येवाह दूये खलु '' ।

क्रूर । अद्यापि मरणेऽकालेऽपि कुमुदिनीं स्मरसि किमु त्वम् ?

चन्द्र । पामर ? दृढं निविष्टाऽस्ति ममास्मिन् हृदये कुमुदिनी । ममैवेयम् । अहमपि तस्या एवाऽस्मि ।

' आम् । मदीयहृदयदयिततम ? भवदीयैवास्म्यहम् । भवता सहोपरस्याम्यहमायामि पश्चाल्लोकम् । ( क्रूरसिंह प्रति । ) पापिष्ठ ! मदीयहृदयेश्वरात्‌ पूर्वमेव मामिहलोकाद् विसर्जय । प्रणिपतामि ते पदयो । ' इत्याभिधाय मध्य एव क्रूरसिंहं प्रणनाम कुमुदिनी । तं प्रणमन्तीमेनां निवारयन्नगादीच्चन्द्र ' कुमुदिनि ? विमूढ कुमुदिनि ! किमिदम् ? प्रभुपदाविव्रतपदनमविधाय नृनामहतकमेन कुक्कुर किमयं प्रणमसि ? किमिदमन्तिमसमये विधीयते त्वया ? ' इति ।

स्वप्रियतमस्य वचनमुपश्रुत्य समुत्थायावाङ्मुखी तस्थौ कुमुदिनी । अथ कुमुदिनीं प्रोवाच क्रूर. ' कुमुदिनि ! किमप्यभिकल्प्यते त्वयेति ? । '

कुमुदिनी । परित्रायस्व मे प्राणेश्वरम् ।

क्रूरः । त्वच्चेन्मदायत्ता भविष्यसि तदा प्रयतामि परित्रातुं तव स्वामिनम् ।

चन्द्रः । ( सभय एव । ) तूष्णीं भव रे पिशाच ! तव जिह्वामेव च्छेत्स्याम्यहम् । ( कुमुदिनीं प्रति । ) प्रिये ! किमिदमभिधीयते त्वया ? मा कुरु प्रार्थनामेतस्य हतकस्य । एहि, परलोकप्रस्थानायाधुनावां सज्जीभवावः । ( क्रूरं प्रति । ) एहि चण्डाल ! विधेहि पूर्णमधुनाऽस्मत्कृत्यमक्षमा त्वम् ।

चन्द्रस्येदं वचनं निशम्य सम्भ्रममेव क्रूरसिंहस्तद्वधार्थमागत्य तौ परमेश्वर्याभ्यर्णं विधातुं निरदिक्षत् । अतः कुमुदिनीचन्द्रौ सच्चिदानन्दकन्दजगदीश्वरमध्यायताम् । अथ-मिते तयोः परमात्मध्याने क्रूरः कोशात्कृपाणमाकृष्य सक्रोधं प्राशावद्- 'अद्याहमनयोर्बलिदानं विधाय देवीं प्रीणयामि । अद्याऽपनीयते मम वैरनिर्यातनम् । अद्य मद्द्वेषाः प्रत्यर्थिनः प्रतिष्ठन्ते परलोकम् ।' अथ चामुं विहस्य प्रसीदविलासमर्थं क्रूरसिंहः । 'प्रसीद, अनुगृहाण जगदम्बे ! गृहाण निजबलिं दीयमानममुना ।' इत्युदीर्य यावत्क्रूरः प्रवर्तते प्रहर्तुं तावदेव समजायत ध्वनिरेको महान्; तेन साकं देव्याः मूर्तिरपि विचलन्तीवालो-क्यत । चमत्कृत्य चकितस्यास्य क्रूरस्य पाणावेव चित्रार्पितमिवावस्थितं कृपाणम् । भयाकुलचित्तः सभयं चक्षुषी विस्फार्य देवीप्रतिमाभिमुखं यावदालोकते तावदेव तदभ्यन्तरात्- 'क्रूरसिंह ! नास्म्यहं प्रसन्ना बलिमिममुरीकर्तुम् ।' इति समभूयत ध्वनिः ।

ध्वनिममुमाकर्ण्य क्रूरसिंहो भयभ्रान्तमना बभूव । पश्चाच्च भयं साश्रयं विरचिताञ्जलिः 'अम्ब ! किं निमित्तम् ?' इति ।

अथ पुनस्तदभ्यन्तराद् ध्वनिरायात –'क्रूरसिंह ! भवीयमकस्माधुना त्वदीयजीवनरज्जुः । अतोऽहमभिलष्यामि परित्रातुमिमान् । क्रूरसिंह ? तेषां स्थाने त्वद्देहमेव बलिं ग्रहीतुमुत्-कण्ठितोऽस्मि ' इति ।

इति श्रुत्वाऽसौ देवीप्रतिमां द्वि-कृत्वा बहिर्निर्गत्य वीरवरो रणवीरस्तदग्र एवोपास्थितवान् । अकस्मादमुं मूर्तिमध्यान्निर्गतमवलोक्य दुरात्मा क्रूरसिंहः परित्यज्य कृपाणमेव, महाघोर-शङ्कित इव रणवीरमभ्यधत्त– ' अये ! कोऽयं चमत्कारः ? जीवितोऽसि खलु ? ! रे रणवीर ! इतस्त्वमिह ! ' इति ।

रणवीरः । तव कवोष्णं रुधिरं पातुम्, त्वदुत्तमाङ्गं देव्यै बलिं दातुम्, नितराम-स्मात् भ्रातृजायामपि परित्रातुमत्र समागतोऽस्मि ।

क्रूरसिंहमुखात् रणवीरनामधेयमुपश्रुत्य प्राप्तसंशयौ यावदुपरि विलोकयतश्चन्द्रसिंह-कुमुदिन्यौ तावदेव पुरस्तात्स्थितं स्वानुजं रणवीरमद्राक्षीदसौ । रणवीरमवलोक्यैवायं सहसा व्याहा-र्षीद्- ' वत्स ? कुरु मां बन्धनमुक्तमद्यामुं पापिनम् । अद्य एव नृशंसमेनं प्रबलकरवा-लेन विदारयामि ' । इति ।

चन्द्रसिंहवाक्यश्रवणसमकालमेव रणवीरः स्वबन्धुं बन्धनमुक्तं विधातुं तदभिमुखं

गन्तुं यावदुपक्रमते तावदेव सहसाऽग्रतोऽभिगत्य शूरेण गच्छत्ययं निरुद्धः । तत्क्षणमेव निजभुशुण्डीं क्रूराभिमुखं संधाय प्रोक्तवान् रणवीरः- ' अलमलं शूर ! तत्स्थानादेकमपि पदं प्रचलिष्यसि चेदुत वा मनागपि प्रजल्पिष्यसि यदि तर्हि गोलिकेयं तवोरःस्थलं प्रविश्य परपारं निर्गमिष्यतीति दृढमवेहि । ' इति समाख्याय तेन समं चिक्रीडिषुरिवायं भुशुण्डीं तदभिमुखं धृत्वा स्थितवान् ।

' किमेवं कुरुते रणवीरः ? किमयं मां बन्धनान्मोचयत्यथ' मिति विचिन्तयामास चन्द्रः । स्वभ्रातुराशयमभिज्ञाय चतुरो रणवीरस्तमवादीत्- ' आर्य ! क्षणं धैर्यमाकलय । दुरात्माऽयमधुना स्वल्पकालमेव जीवति । तदहमत्र रमयामि कियत्कालम् । ' इति । रणवीरस्येदं वचः संश्रुत्य क्रुधा क्रूरसिंहः सैनिकानुच्चैराहूयाऽऽजिज्ञपत्- ' अयि मदीयवीरवराः सहचराः ! सद्य एवाभिपत्य बालकमेनं निहत्य खण्डशो विदधतु भवन्तः । ' इति ।

सेनापतिनिर्देशसमकालमेव सकला सैनिका रणवीराभिमुखं निजनिस्त्रिंशानाकृष्याभ्यपतन् । तान् स्वाभिमुखमापततो निरीक्ष्य रणवीरः शान्त्या स्थित्वा तत् क्रूरसिंहस्य भूतपूर्वं किङ्करयुगलमधुनाऽपि बहिः प्रदर्शिततदनुचरभावविहितप्रहरिकार्यं परीक्षितुमनास्तदभिमुखं निरैक्षिष्ट । इमावपि कृतवेदिनौ प्रहरिभटौ स्वशरणदातुः श्रीरणवीरस्य साहाय्यार्थमभिद्रुत्य कृपाणमाकृष्य रणवीरमभितः संरक्षितुं स्थितौ । स्वानुचरौ रणवीररक्षणं कुर्वाणौ निर्वर्ण्य विविस्मयस्तिमितमानसः क्रूरसिंहः- ' नूनं जातोऽत्र कोऽपि विश्वासघातः । ' इति विचिन्तयामास ।

अथ स्वयमेवासौ नृशंसो महता कोपेन स्वचन्द्रहासमाकृष्य रणवीरमभ्यपतदिति तदीयाः सैनिका अपि तत्साहाय्यार्थमभिधाव्य प्रहरिभटद्वयसहितं रणवीरं पर्यवेष्टयन् । इत्थमवलोक्यैव रणवीरो निजभुशुण्डीनिर्हादमकार्षीत् । भुशुण्डीनिःस्वनसमक्षणमेव पूर्वत एव तिरोहिता रणवीरसैनिकाः स्वनायकसहिताः कन्दरमन्दिराणि परित्यज्य सद्य एव तत्रोपाजग्मुः । क्षणादेव तद् गुप्तगृहचत्वरस्थलं रणवीरस्य बलेन सकुलं समजायत । स्ववीरयोधानालोक्य रणवीरः क्रूरसिंहं प्रग्रहीतुममूनादिदेश । तत्कालमेव चतुर्भिर्वीरभटैर्निजगृहे क्रूरसिंहः । निगडितश्चास्य करचरणं लोहशृङ्खलया । अवशिष्टास्तत्सैनिका अपि बन्दीकृताः ।

अनन्तरं रणवीरो निजबन्धुं बन्धनमुक्तं कर्तुं तदन्तिकं ययौ । अत्र प्रागेव पुरुषवेशधारिणी चतुरा रत्नप्रभा कुमुदिनीसमीपमागत्य तां बन्धनान्मोचयितुं प्रवृत्ता । ' कोऽयं सुन्दरो राजकुमारः स्यात् । ' इति मनसि विमृशन्ती कुमुदिनी रत्नप्रभां पृष्टवती-' बन्धो ! कोऽसि त्वम् ? ' इति ।

कुमुदिनीप्रश्नमाकर्ण्य तां मोचयन्ती सस्मितमुखाम्बुजा रत्नप्रभा- ' अत्रभवत्या निदेशवर्तिनी कनिष्ठभगिनीयममरकण्टकाधिपतिमहाराजस्य नन्दिनी रत्नप्रभा भगवतीमभिवादयते । ' इति समुदचारीत् ।

इत्यभिधाय रत्नप्रभा कुमुदिनीं बन्धनादुन्मोच्य तदीयचरणयोर्निपतितवती। तस्या वचनं निशम्य विसिस्मिये कुमुदिनी। एषा रत्नप्रभायाः कुशलं पृष्ट्वा हृदा चेमामालिङ्ग्य मुमोच प्रमोदाश्रुजलम्। अथ रणवीरश्चन्द्रसविधे गत्वाऽऽदौ विमलां विमोच्य पश्चात् स्वाग्रजन्मानं बन्धनान्मोचितवान्। यथैवं मुक्तोऽयं चन्द्रो बन्धनात् तथैवासौ स्वपार्श्वस्थितस्य कस्यचिद् भटस्य हस्तात् कृपाणमाच्छिद्याकस्माद् बुभुक्षितव्याघ्र इव क्रूरसिंहाभिमुखं निद्रुत्य चरणाभ्यां बलेन प्रजहार। चन्द्रपदप्रहारसमकालमेवायं पापिष्ठोऽवनितले निपत्य भिया कम्पितुमारेभे। भूतलपातितं तमवलोक्य चन्द्रस्तदुरस्स्थलमारुह्योपविष्टवान्। समयेऽस्मिन् भयङ्कराकृतिरयं व्यलोक्यत चन्द्रः। रणवीरः कुमुदिनी रत्नप्रभा सर्वेऽपि ससैनिका नायकास्तु स्तब्धीभूय चन्द्रसिंहं निरीक्षाञ्चक्रिरे। अत्रान्तरे चन्द्र क्रूरं स्वकरस्थ कृपाणमुत्तोल्य यावदमुं प्रहर्तुं प्रवर्तते तावदेव महाभयानको ध्वनिरेकोऽजायत। येन साकमेव 'विरम, राजकुमार! विरम। जीवतु किञ्चित्कालमसौ नृशंसः!' इति गिरमुदीरयन्तौ द्वौ महात्मानौ योगीन्द्रौ तत्रागत्य स्थितौ। चन्द्रस्य चोद्यतं करवालधरं करमिमौ पृष्ठतो जगृहतुः। योगीन्द्रौ विलोक्य चन्द्रः क्रूरसिंहवक्षसोऽवतीर्य महानुभावयोस्तयोश्चरणारविन्दयुगलमवन्दत। यथानुक्रमं रणवीरकुमुदिनीविमलारत्नप्रभाप्रमुखाः सर्वेऽपि जना योगीन्द्रद्वयं प्रणेमुः। योगीन्द्रयुगलेन निजकरकमलसुधावर्षाऽऽशीर्भिः सभाजिता अखिलाः।

अथ योगीन्द्रनिर्देशेन बन्दीकृतं क्रूरसिंहमादाय सकला अपि गुप्तगृहाद् बहिर्निरगच्छन्। चन्द्रसिंहो निजाज्ञया सैनिकान् गुप्तगृहमिदं विनाशयितुमादिशत्। तत्क्षणमेव सैनिका गुप्तगृहं शिलाशकलमृत्पिण्डखण्डचयैः पूरितवन्तः। इत्थं विनाशितं क्रूरसिंहस्य गुप्तगृहम्। गच्छता कालेन तन्नामापि नावशिष्टम्। गुप्तगृहाद् बहिर्निःसृत्य चन्द्रसिंहः स्वप्रभावेन भीमसमप्रतापसिंहेन सङ्गतः। वर्षीयान् मन्त्रिवरः स्वनरेन्द्रं चन्द्रसिंहमालोक्य सकण्ठाश्लेषं प्रेमबाष्पजलमभिववर्ष। तदनु सर्वेऽपि मिथः संहृष्य सानन्दवदनारविन्दा बन्दीकृतं क्रूरसिंहं सहादाय विजयनगराभिमुखं प्रतस्थिरे॥

+ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य
कृतौ वैदिकराष्ट्रकाव्यानुजे कुमुदिनीचन्द्रे चतुर्दशी कला +

# अथ पञ्चदशी कला

" यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ "　　( विक्रमोर्वशीये )

" सत्यमेव जयते नानृतम् । "　　( इत्युपनिषत् । )

" लभस्व राज्यश्रियमञ्जसा प्रजा भवन्तु भव्याभ्युदयप्रयोजनाः ।
यशस्सैरिन्ध्रीरतराः वर हरन्तु तापं तव वैरिसम्भवम् ॥ "

( प्रकृतिसौन्दर्ये । )

आसीदथ विजयनगरप्रासादस्याभ्यन्तरमस्मिन् विशाले रङ्गमहालये महती राजसभा भविश्री । अभूदथ दुरात्मनो नृशंसस्य कूर्मसिंहस्यान्तिमो न्यायो भवितेति राजसभायां गन्तुं नगरवासिनो लब्धवर्णा प्रतिष्ठिता पुरस्था समुत्सुका भवितुमारेभिरे । प्राह्णेऽन्वे कादशवादने मनोहरोज्ज्वलनेपथ्यशालिनः सामन्ताः सेनापतयो मण्डलेश्वरा नगरश्रेष्ठिनो विचक्षणाश्चान्येऽपि गुरुयशसो गृहमेधिनो महोदया अनुक्रमं राजसमितिं प्रविश्य यथायोग्य निजार्थमुपयोजितान्यासनानि भेजिरे । प्रतीहारो राजसभाद्वारमुपस्थितानां प्रमहोदयपु रुषाणां नामानि समुदीर्याभ्यागतनृणां समुद्दयाय सम्मानं ददौ । राजपरिषन्मध्यभागे [illegible] विशाले मृगचर्मशायिरे महार्हसिंहासने विलसत, तयोर्मध्येऽतिविशालमेकं प्रोज्ज्वलं रत्न जटितं भद्रासनं शोभते [illegible] । इत्थमन्येषां सामन्तसेनानीप्रमुखाणां कृतेऽपि विविधमहार्ह मण्डलमायोजितमभवत् । नरेन्द्रपरिषदि महिलामण्डलार्थमपि पृथगुपवेशनस्थले समायोजि तानि रुचिरमणिमयानि कौशेयाम्बरनिर्मितानि मृदुलकलितानि सुन्दरासन्दीवृन्दानि । माण्डलिकसेनानायकसुप्रतिष्ठाभाजनपुरुषपुङ्गवैः राजपरिषदियमावेसकुलमापूर्णा बभूव ।

अद्यापि नोपयस्य वसुमतीवासव । सर्वेऽपि सभ्याः सोत्कण्ठमानसा महीमण्डलाखण्डल प्रतिपालयाञ्चक्रिरे । " विजयतां विजयनगराधीश्वर । चिरं जीवतु जगज्जीवनो विश्वम्भ रेश्वर । " इति जयघोषपुरस्सराशीर्वचोराशिसमाकर्णनसमकालमेव सभागतजना उपविशते नरेन्द्रः साम्प्रतम् । ' इत्यवगम्य सावधानाः समवर्तन्त । विशेषतः समासदामि दानीं द्वाराभिमुखीबभूव नयनचकोराङ्गनापङ्क्तिर्मेदिनीमेदलोय नरेन्द्रचन्द्रं पातुमनिमेष मेषा । अत्रान्तरे निजानुजस्य नृपचक्रवर्तिनो महाराजश्रीरणजोरासिंहस्य हस्तारविन्दमादाय महीमहेन्द्रो महाराजश्रीचन्द्रसिंहः सानन्दवदनेन्दीवरो राजसदनं समासदत् । तदनु

१ सुखाय । ' निर्वाणं निर्वृतिः सुखम् । ' २ यश सरसि रे–कीर्तिनदीजले । ३ विचक्षणाः । ४ गृहस्थः । ५ राजसभाम् । ६ समुद्दाय । ७ सिंहासनम् । ८ महीमहेन्द्रः । ९ सम्पानाम् । १० महीनन्दनम् । ११ राजसभागृहम् ।

निःशेषभुवनवन्दनीयौ प्रशान्तपावनीयमुखचन्द्रौ महनीयानुभावसान्द्रौ योगीन्द्रावपि नरेन्द्रसभामन्दिरं प्राविशताम् । महामनोरनयोरनन्तरममरकण्टकस्थविरमन्त्रिवरस्य श्रीमद्योगेन्द्रनाथस्य कराम्बुजं गृहीत्वा प्रजया प्रधानः श्रीप्रतापसिंहो नरसिंहसभालयं प्राविक्षत् । सर्वेषाममीषां पश्चादनुक्रमं कुमुदिनी रत्नप्रभा विमलाऽमरकण्टकवृद्धराजमहिषी चन्द्रप्रभाऽपि नृपसंसदं प्रविष्टा। इत्थमखिले राजपुरुषमण्डले राजसभासदनमुपसेदुषि सति सकलाः सभासारा नरा निजासनादुत्थाय नरेन्द्रश्रीचन्द्रसिंहस्य जयमुदीर्य प्रणेमुराखिलामभूत् । प्रविश्य राजसभां रुचिरोज्जितचारणौ समलङ्कृततनू सिंहासने उभावपि महानुभावौ योगीन्द्रौ । तत्पश्चाद्वार्ते नृपासने नृपवरः श्रीचन्द्रसिंहो निजानुजेन मनुजपतिना श्रीरणधीरसिंहेन समं समलङ्कृतवान् । ततो मनाङ्निम्नमासने विष्टरे मन्त्रिपुरुषौ विरेजतुः । तस्मात् पृथगायोजितेषु सुन्दरसभ्रासनेषु सकलोऽपि लक्ष्मासमुदायो निजनिजासनमलङ्चकार । सर्वतोऽपि राजपरिषदि विरराज शान्तिदेवी । इत्थमतीते होरैककाले महाराजश्रीचन्द्रसिंहः स्वमेतानायकयुगलाभिमुखमवलोक्य ' नायकौ ! स्वबन्धनाश्रमात् बन्दीकृतमादायोपागतमिह । ' इति गिरमुदाजहार ।

" यथादिशति राजेन्द्रः । " इत्यभिधायोभावपि नायकौ नरेन्द्रं प्रणम्य निवृत्य निर्गत्य ततः कियत्समयानन्तरमेव लोहमयशृङ्खलानियन्त्रितकरचरणं नृशंसं शूरसिंहं राजसभायां समानीय स्थापितवन्तौ । राजसभामध्येऽवाङ्मुखमस्थात् शूरसिंहः । पापिष्ठ शूरसिंहमवलोक्यैव सकलैः सभ्यजनैस्तदुपरि निपातिता तिरस्कारमयी दृष्टिः । क्षणं मौनमाकलय्याथो महाराजश्रीचन्द्रसिंहो रोषारुणलोचनः शूरसिंहमभाषत– ' किं रे शूरसिंह ! कस्मिन् विचारे निमग्नोऽसि ? किमेवं शान्तो भूत्वा स्थितोऽसि रम्यम् ? ' इति ।

शूरसिंहः । ( दीनमुखः सप्रश्रयम् । ) राजेन्द्र ! नृशंसः पापात्मा निर्घृण कृतघ्नोऽविनीतस्वभावं शूरसिंह सम्प्रति पश्चात्तापानलेन दग्ध्वा भस्मीभवति । असंख्यानि सन्ति मे दुरितानि । भगवन् ! नाहमिच्छामिदानीमिह मेदिनीमण्डले क्षणमपि जीवितुम् । तदनुकम्पातो यथाममभयमभ्रमा यमसदनं विसर्जनीयः प्रभुणा । भवादृशां धर्मधारिधुरन्धराणां धरणीधराधीश्वराणां हस्तात् भवेन्मम यदि मरणं सुरलोकपरागे तर्हि समुपेत्यायकम् ? ! चन्द्रसिंह ! सपरिवारं श्रीमन्तं चिरायुषं करोतु जगदीश्वर इति मम्पप्तजनसुमहरं शङ्करं प्रार्थयेऽहमन्तिकाम् ।

चन्द्रसिंहः । ( सान्त्वयन् । ) शूरसिंह ! प्राणेश्वरः शुभविचारस्तव हृदि यदि पदमकरिष्यत्तदा नेदृशी दुर्गतिरभविष्यदद्य ते ! ! ।

शूरसिंहः । तथ्यमभिधीयते नरेन्द्रेण । विनाशकाले विपरीतबुद्धिरिति किं न विज्ञायते

---

१ राजसभाम् । २ सभ्यः । ३ अधोनतं मुखम् । ४ अ मने । ५ नास्तिकः । ६ पृथ्वीपालेश्वराणाम् ।

प्रभुणा ! यदा हि परिणिनंसिपति दशा तदानीमेव शेमुषी जायते मलीमसा, विलीयते चाखिलाऽपि चातुरी । करं एव तिष्ठते करगतं शस्त्रम् । राजन् ! न न तिष्ठति खलु कलुषकलशः । सत्यमेव जयते नानृतम् ।' तदनुगृह्णाय नृशंसो दुरात्मा क्षणमेकमपि साम्प्रतमर्मर्षणीय खलु जीवद्यत्र भवता ।

चन्द्रसिंहः । समीचीनम् ? इदानीमेव प्राप्स्यसि स्वमात्मकर्मणः फलम् । ( प्रधानं प्रति । ) आर्यप्रतापसिंह ? निशाम्यतामयं तदीयं भाति शासनं वन्दीकृतो भवता, येन सज्जीभवेदसौ ।

महाराजनिदेशसमकालमेव प्रतापसिंहो दण्डनिदेशमिममनुवाच्य समश्रावयत्– " राज्यरिपो कूरसिंह ? चिरकालात्प्रमजितदुर्गस्य विजयनगरस्य चाधिपतिमि सर्वं निगृह्णन् वैरमाचरसि । अजितदुर्गाधिपतिमहाराजश्रीकेसरिसिंह शरणागताभ्यां युवाभ्यां जनकतनयाभ्यामभय दत्वा निजाश्रये निदधे वाम् । तस्य महाराजस्यात्र सुखजाते भवन्तौ । कृतज्ञतया परिप्ररितु युवाभ्यां दत्तमासीद् वचनं महाराजाय । तद् वचनमपालयता त्वया तदीय अकम्पना तस्यैव कृतघातिता व्यधायि । राज्ये राज्ञि समस्तरि त्वया विरचित बहुविध कपटजालम् । तेषां प्रतिफलत्वेन यत्ते शासनं विधीयते तदत्यल्पमेव वरीवर्ति । कूरसिंह ? शृणु निजापराधान्–

१– अजितदुर्गनगरश्रेष्ठिनः पुत्रापहरणम् ।

२– अबलायास्तस्या उपरि बलात्कारप्रवर्तनम्, अत एव तस्या वनितायाः निजात्मघातकरणम् । अथ प्रमदायास्तस्याः कलेवरं शकलीकृत्य तदीयहत्या गोपायितुमनसा भूमौ तस्याच्छादनम् ।

३– रणवीरसिंहापहरणम् , महाराजस्य मृत्युसम्पादनम् ।

४– राजनन्दिन्याः कुमुदिन्या दुष्टवासनामयी दृष्टि, तस्याश्चाहरणम् ।

५– महाराजश्रीविजयसिंहस्य प्राणग्रहणकूटयन्त्रम् ।

६– राजकुमारश्रीचन्द्रसिंहस्य विश्वासघातं विधाय प्रग्रहणम् ।

७– महाराजश्रीविजयसिंहस्य प्राणविनाशनम् ।

८– कुमुदिनीहरणम्, तस्या उपरि अत्याचारकरणम्, तस्याश्च बलिं दातुं नयनम् ।

९– महाराजश्रीचन्द्रसिंहस्यापि बलिदानसम्भारः ।

१०– विमलहृदया स्वपत्नीं विमलामपि बलिमर्पयितुं तव विचारः ।

कूरसिंह ? इयन्ति तवागांसि सन्ति । कतिचारं त्वामसन्महाराजः पापकर्मणो निवार्य निहत्य जीवन्तमेव निमुच्य दयाञ्चके । अत एव तदीयदयाया दुरुपयोगो विहितस्त्वया ।

१ बुद्धि । २ मलिना । ३ नरपति । ४ असत्र । ५ दण्ड । ६ कलह दुर्जन् । ७ कपट जालम् । ८ बन्दीकरणम् । ' प्रग्रहोपग्रहौ बन्द्याम् । ' इत्यमर । ९ ' आगोऽपराधो मन्तुश्च । ' इत्यमरः ।

